# विश्वविद्यालयगीतम्

शतशतकोटिशरत्पर्यन्तम्
प्रवहतात् संस्कृतमन्दाकिनी ।।धृ।।

सिन्धु–शुतुद्री–सरस्वतीनाम्
तटे ऋषीणां ध्यानपराणाम्
होमधूमपावितलोकानाम्
अत्रिभृगूणां छन्दोवाणी ।।1।।
प्रवहतात् ......

वाल्मीकिमुनि – व्यासविरचिता
रामकृष्णयोः पावन–गाथा
अखण्डदीपो भगवद्गीता
कर्मयोगसंदेशवाहिनी ।।2।।
प्रवहतात् ......

राष्ट्रैक्यस्य च महती स्फूर्तिः
विना संस्कृतं नैव संस्कृतिः
पुष्टिं तुष्टिं समावहन्ती
इह परत्र कल्याणकारिणी ।।3।।
प्रवहतात् ......

रचयिता
महाकवि : डॉ. श्री. ग. बा. पळसुले

# From Editor's Desk

Dear Sanskrit lovers!

Welcome to this issue of Shodhasamhita, the UGC care listed journal of KKSU. May the energy responsible for knowledge and wisdom inspire us all in the study of our traditions in modern context and help the mankind reach excellence in the pursuit of knowledge!

Shodhasamhita is a research Journal. Research is primarily to bring out some unknown or less known facts useful to the society. Beating around the bush, redundancy and such rubbish should be sincerely avoided in research.

Sanskrit studies, under the new name of Indian Knowledge Systems, gained the attention of the elite and new research is being encouraged by Higher Education Institutions in India.

India had been the fertile land of several sciences and technologies in ancient and medieval period. A faithful study of our past can throw light on many hidden aspects of our history and legacy. The greedy invasions by foreign people had destroyed much of our intellectual development forcing us to believe that all science and technology came from other lands into India. An age of resurgence always occurs in history.

The National Education Policy-2020 lays emphasis on revisiting the Indian Knowledge Systems, especially, the sciences and technology of this land for finding solutions to many contemporary issues. Dedicated and honest research is much required in the fields of mathematics, astronomy, consciousness studies, manuscripts, archeology, inscriptional studies, physical sciences, health sciences, humanities and others.

We all should note that it is our collective responsibility to present quality research only to the society. If any other motive comes in, like promotion etc., research quality gets compromised and we will become laughing stock before others.

Shodha samhita encourages sincere research based on original sources from Sanskrit, Pali, Prakrit texts. Innovative and relevant research finds first place in shodha samhita.

It has come to our notice that some antisocial elements are exploiting the resources and circulating duplicate and forged Shodha samhita, thus cheating the researchers. My sincere appeal to all researchers is that they should approach the university on the mail and phone number available on our website only and pay the required fees on getting official instruction only. A police complaint has been lodged against such miscreants who are cheating the researchers.

May we collectively contribute to a better society!

**Prof. Penna Madhusudan**

# Content


| Sr. No. | Title | Pg. No. |
|---|---|---|
| 1 | **काव्यप्रकाशे पञ्चमतो दशमोल्लासं यावदुद्धृतानां**<br>डॉ.राधावल्लभशर्मा | 1 |
| 2 | **श्रीशाण्डिल्येनाथर्वणात्प्राप्तब्रह्मविद्या**<br>केशवकुमारः मन्था | 17 |
| 3 | **पाणिनीयनये अपादानतत्त्वविमर्शः**<br>डॉ. अभिमन्यु कुमार | 30 |
| 4 | **कर्मणा यमभिप्रैति स सम्प्रदानम्**<br>जयवन्त चौधरी | 38 |
| 5 | **वर्तमानसमाजे प्राचीनधर्मशास्त्रनिरूपितदायभागस्य प्रासङ्गिकत्वम्**<br>ड. अञ्जनदासः | 43 |
| 6 | **भारतीयपरम्परादिशा दाम्पत्यविच्छेदपरिहारोपायाः**<br>चव्हाण-अविनाशः | 50 |
| 7 | **कीर्तननृत्यम् – वैष्णवीयप्रीतलाभस्यैका दिक्**<br>अमल कुमार कर | 63 |
| 8 | **समानकर्तृकयोः पूर्वकाले सूत्रविचार (भाष्यकार एवं टीकाकारों की दृष्टि में)**<br>डॉ. ललित प्रधान | 71 |
| 9 | **कौटिलीय अर्थशास्त्र में नगररचनाविचार तथा स्मार्ट सिटी संकल्पना**<br>डॉ रेणुका बोकारे | 78 |

| | | |
|---|---|---|
| 10 | **आयुर्वेद सूत्रम् ह्या ग्रंथातील आहाराविषयक विचारांचे अध्ययन**<br>विद्या लांजेवार | 93 |
| 11 | **Dhruva Giti-s: A musical composition in Sanskrit Drama**<br>Dr.Geetha H | 101 |
| 12 | **Finding Meanings in Ted Hughes "Thrushes" through Sabdasaktyubdbhava & Arthasaktyaudbhava Dhwani**<br>Priyamvada C, Maitali Khanna, M Praphulla | 108 |
| 13 | **Śrīdhara's concept of Bhakti: A study of Subodhinī commentary on Bhaktiyoga chapter of Bhagavadgītā**<br>Swati Phadke, Dr. Shakuntala Gawade | 118 |
| 14 | ***Vṛddhagarga saṁhitā* on vastuvidya**<br>Prof. R.N.Iyengar, Warija Adiga | 131 |
| 15 | **Effect of Functional Organisational Climate on Managerial Effectiveness in IT Sector as per Ancient Indian Texts**<br>R. KHERDE, D. CHRISTIAN & Prof. K. HOLEY | 154 |

# काव्यप्रकाशे पञ्चमतो दशमोल्लासं यावदुद्धृतानां प्राकृतपद्यानां लोकोत्तरवर्णनपरिस्फुरत्ता

**डॉ.राधावल्लभशर्मा**

अवगतसर्वशास्त्रहृदयोऽनुपमपण्डितो राजानकमम्मटाचार्यः काव्यप्रकाशाख्यं ग्रन्थरत्नं जग्रन्थ इति सर्वविदितोऽयं प्रसङ्गः। ग्रन्थरत्नेऽस्मिन् काव्यशास्त्रीयसिद्धान्तान् विषयांश्च समन्वयात्मिकया सरलया च शैल्या प्रत्याख्याय साहित्यविद्याधुरिणानेन विदुषा किमप्यपूर्वं कविकर्म प्राकाशि। सिद्धान्तानाममीषामुदाहरणत्वेन प्रायः प्राकृतभाषा सुष्टुतया समाश्रिता सरस्वतीसूनुनानेनेति भाषास्नेहोऽत्र संलक्ष्यते। भाषाया अस्यामहत्त्वमुररीकृत्य वाक्पतिराजो गउडवहोनामधेये ग्रन्थे इदं बभाषे -

**णवमत्थ दंसणं संनिवेससिसिराओ बंधरिद्दीओ।**
**अविरलमिणमो आभुवनबंधमिह णबर पअअम्मि ॥**[1]

इत्थमेव महेश्वरसूरिणाप्यवादि–

**गूढत्थदेसिरहिअं सुललिअवण्णेहिं विरइअं रम्मं।**
**पाइयकब्बं लोए कस्स ण हिअअं सुहावेइ ॥**[2]

संस्कृतसरस्वत्याः सौभाग्यसीमानः एतादृशा महाकवयोऽपि प्राकृतस्याग्रे संस्कृतं गौणीकुर्वन्ति। तद्यथा–

**परुसा सक्कअबन्धा पाउअबन्धो वि होइ सुउमारो।**
**पुरसमहिलाणँ जेत्तिअमिहन्तरं तेत्तियमिमाणम् ॥**[3]
**ललिए महुरकखरए जुवईजणवल्लहे ससिंगारे।**
**सन्ते पाइअव्वे को सक्कइ सक्कअं पठिउम्।**[4]

इत्थमिह प्रकाशे समुदाहृतानां प्राकृतपद्यानामनतिरसाधारणं वैशिष्ट्यं विस्तरेण तावद्वर्ण्यते। पञ्चमोल्लासे असुन्दरगुणीभूतव्यङ्ग्यस्योदाहरणं यथा–

**वाणीरकुडंगुड्डीणसउणिकोलाहलं सुणन्तीए।**
**घरकम्मवावडाए बहुए सीअन्ति अंगाइं ॥**[5]

गृहपार्श्ववर्तिवेतसनिकुञ्जे दत्तसङ्केताया निकुञ्जोड्डीनपक्षिकोलाहलतर्कितनायकप्रवेशाया गुरुजन-पारतन्त्र्येण गृहकर्माणि रन्धनादौ व्यावृताया अवस्थावर्णनमिदम् ।

अत्र दत्तसङ्केतचौर्यकामुकरतसमुचितस्थानप्राप्तिर्ध्वन्यमाना वाच्यमेवोपस्कुरुते । तथा हि गृहकर्मव्यापृताया इत्यन्यपराया अपि, वध्वा इति सातिशयलज्जा पारन्त्र्यबद्धाया अपि, अङ्गानीत्येकमपि न तादृगङ्गं यद्गाम्भीर्यावहित्थवशेन संवरीतुं पारितम् । सीदन्तीत्यास्तां गृहकर्मसम्पादनं स्वात्मनमपि धर्तुं न प्रभवन्तीति । गृहकर्मयोगेन स्फुटं तथा लक्ष्यमाणानीति । अस्मादेव वाच्यात्सातिशयमदनपरव-शताप्रतीतेश्चारुत्वसम्पत्तिरिति । वस्तुतः सीदन्तीति वर्तमाननिर्देशादवसादस्याविरामः सूच्यते । तथा श्रवणसमकालं तत्कार्यस्यावसादस्यकथनरूपातिशयोक्त्या उत्कण्ठातिशयो व्यज्यते । अत्राङ्गानि सीदन्तीति वाच्यादत्तसंकेतो लतागहनं प्रविष्ट इति व्यङ्ग्यमस्फुटम् ।

वाच्यव्यङ्ग्ययोः विषमभेदस्योदाहरणं यथा—

**कस्य वा ण होइ रोसो दट्ठूण पिआइ सव्वणं अहरं ।**
**सभरपडमग्धाइणि वारिअवामे सहसु एण्हिं ॥**[6]

परपुरुषखण्डिताधरतया कुपिते प्रोष्यागते पत्यौ सख्या निरपराधत्वबोधनाय प्रतारणोक्ति-रियम् । अत्र वाच्यार्थबोधस्य विषयो नायिका व्यङ्ग्यार्थस्य च विषयो नायको वर्तते । अत्रायमभिप्रायः— काचिदविनीता कुतश्चित्खण्डिताधरा निश्चिततत्सविधसंनिधाने तद्भर्तरि तमनवलोकमानयेव कयाचिद्विदग्धसख्या तद्वाच्यतापरिहारायैवमुच्यते । सहस्वेदानीमिति वाच्यमविनयवतीविषयम् । भर्तृविषयं तु— अपराधो नास्तीत्यवेद्यमानं व्यङ्ग्यम् । सहस्वेत्यपि च तद्विषयं व्यङ्ग्यम् । तस्यां च प्रियतमेन गाढमुपालभ्यमानायां तद्व्यलीकशङ्कितप्रतिवेशिकलोकविषयं चाविनयप्रच्छादनेन प्रत्यायनं व्यङ्ग्यम् । तत्सपत्न्यां च तदुपालम्भतदविनयप्रहृष्टायां सौभाग्यातिशयख्यापनं प्रियाया इति शब्दबलादिति सपत्नीविषयं व्यङ्ग्यम् । सपत्नीमध्ये इयता खलीकृतास्मीति लाघवमात्मनि ग्रहीतुं न युक्तं, प्रत्युतायं बहुमानः, सहस्व शोभस्वेदानीमिति सखीविषयं सौभाग्यप्रख्यापनं व्यङ्ग्यम् । अद्येयं तव प्रच्छन्नानुरा-गिणी हृदयवल्लभेत्थं रक्षिता पुनः प्रकटरदनदंशनविधिर्न विधेय इति तच्चौर्यकामुकविषयसम्बोधनं व्यङ्ग्यम् । इत्थं

मयैतदपह्नुतमिति स्ववैदग्ध्यख्यापनं तटस्थविदग्धलोकविषयं व्यङ्ग्यमिति ।

लक्ष्यार्थेन व्यङ्ग्यार्थस्य द्वितीयो भेदो यथा–

**अत्ता एत्थ णिमज्जइ एत्थ अहं दिअहए पलोएहि ।**

**मा पहिअ! रत्तिअन्धअ! सेज्जाए मह णिमज्जहिसि ॥**[7]

मह इति निपातोऽनेकार्थवृत्तिरत्रावयोरित्यर्थे न त ममेति। एवं हि विशेषवचनमेव शङ्काकारि भवेदिति प्रच्छन्नाभ्युपगमो न स्यात्। कांचित्प्रोषितपतिकां तरुणीमवलोक्य प्रवृद्धमदनाङ्कुरः सम्पन्नः पान्थोऽनेन निषेधद्वारेण तयाभ्युपगत इति निषेधाभावोऽत्र विधिः न तु निमन्त्रणरूपोऽप्रवृत्तप्रवर्त-नास्वभावः सौभाग्याभिमानखण्डनाप्रसङ्गात्। अत एव रात्र्यन्धेति समुचितसमयसम्भाव्यमानविकारा-कुलितत्वं ध्वनितम्। भावतदभावयोश्च साक्षाद्विरोधाद्वाच्याद्व्यङ्ग्यस्य स्फुटमेवान्यत्वम्। अथ यद्यपि भवान्मदनशरासारदीर्यमाणहृदय उपेक्षितुं न युक्तः तथापि किं करोमि पापो दिवसकोऽयमनुचितत्वात्कु-त्सितोऽयमित्यर्थः। न च सर्वथा त्वामुपेक्षे, यतोऽत्रैवाहं तत्प्रलोकय नान्यतोऽहं गच्छामि। तदन्योन्यव-दनावलोकनविनोदेन दिनं तावदतिवाहयाव इत्यर्थः। प्रतिपन्नमात्रायां च रात्रावन्धीभूतो मदीयायां शय्यायां मा श्लिषः, अपि तु निभृतनिभृतमेवात्ताभिधाननिकटकण्टकनिद्रान्वेषणपूर्वकमितीयदत्र ध्वन्यते।

काव्यशास्त्रे सुतरां प्रसिद्धमिदं पद्यं कामप्यनिर्वचनीयां विच्छित्तिं धत्ते। प्राकृतस्येदमेव वैशिष्ट्यं यद् भावबोधः, अर्थसङ्गतिः, व्यङ्ग्यचमत्कारश्चात्र विशिष्येण द्योत्यते। प्राकृतस्येकमपि पद्यं तादृशं नास्ति यत्र कवेरनल्पना विलासः, नवनवोन्मेषस्य प्रथा, रसानुगुणो विन्यासश्च न स्यात्। प्राकृतभाषायां कवेरुद्दामकवित्वशक्तिरप्रतिहतरूपेण पदे-पदे दृग्गोचरीभवतीति विद्यावैभवसंवलितानां कोविदकुलकुमु-दकलाधराणां चिन्तक्रमः।

लक्ष्यार्थव्यङ्ग्यार्थयोः सम्बद्धसम्बन्धस्योदाहरणं यथा–

**विपरीअरए लच्छी ब्रह्मं दठ्ठूण णाहिकमलठ्ठं ।**

**हरिणो दाहिणणअणं रसाउला झत्ति ढक्कइ ॥**[8]

अत्र हि हरिपदेन दक्षिणनयनस्य सूर्यात्मकता व्यज्यते, तन्निमीलनेन सूर्यास्तमयः, तेन पद्मस्य सङ्कोचः, ततो ब्रह्मणः स्थगनम्, तत्र सति गोप्याङ्गस्यादर्शनेन अनिर्यन्त्रणं निधुवनविलसितमिति। व्यञ्जनाया अनुमानेऽन्तर्भावं प्रदर्शयन्नुदाहरणं प्रस्तौति–

**भम धम्मिअ वीसद्धो सो सुणओ अज्ज मारिओ तेण।**

**गोलाणईकच्छकुडंगवासिणा दरिअसीहेण॥**[9]

कस्याश्चित्सङ्केतस्थानं जीवितसर्वस्वायमानं धार्मिकसञ्चरणान्तरायदोषा त्तदवलप्यमानपल्लवकु-सुमादिविच्छायीकरणाच्च परित्रातुमियमुक्तिः। तत्र स्वतः सिद्धमपि भ्रमणं श्वभयेनापोदितमिति प्रतिप्रसवात्मको निषेधाभावरूपः, न तु नियोगः, प्रैषादिरूपोऽत्र विधिः। स एव निकुञ्जभ्रमणायो-ग्यतानुमित्यै प्रभवति। यद्यद्भीरुभ्रमणं तत्तद्भयकारणनिवृत्त्युपलब्धिपूर्वकम्। निकुञ्जे च सिंहोपलब्धि-रिति व्यापकविरुद्धोपलब्धौ पर्यवसनाद्भ्रमणस्य व्यापिका भयकारणाभावोपलब्धिः प्रतीता। तद्विरुद्धं यद्भयकारणं तदुपलब्धेः। अनुमानञ्चात्र इदं गोदावरीनिकुञ्जं श्वभीरुभ्रमणायोग्यं सिंहवत्त्वादिति। अत्रोच्यते– श्वभीरोरवीरस्वभावस्य भ्रमणायोग्यत्वमत्र साध्यं वीरस्वभावस्य वा। विशेषौदासीन्येन तत्सामान्यस्यैव वा आद्ये व्यभिचारः। प्रभोर्गुरो वा निदेशेन प्रियानुरागेण निधिलाभादिशङ्कया वा तादृशस्यापि तत्र भ्रमणदर्शनात्। अत एव नान्त्योऽपि। मध्यमे तु विरोधः। स्पर्शादिशङ्कया अपौरुषेयतया वा श्वतो बिभ्यतोऽपि मृगयादिकुतूहलेन सिंहवद्देशे वीरस्य भ्रमणात्। किं च पक्षे सिंहसद्भावो न मानान्तरेणावधारितः। किं तु पुंश्चलीवाक्यादवधारितः। न तद्वचनं निश्चायकम्। अर्थेन समं संबन्धानियमात् इत्यनिश्चयरूपा सिद्धिः।

अत्र व्यक्तिविवेककारो जगाद– **केवलं योऽसौ भ्रमणविधौ हेतुभावेन दृप्तपञ्चाननव्यापारस्तत्रोपात्तः स एव विमृश्यमानः परम्परया धार्मिकस्य तन्निषेधे पर्यवस्यति तयोर्बाध्यबाधकभावेनावस्थानात्। को ह्यनुन्मत्तः कुक्कुरमात्रसद्भावभयात्**

**परिहृतभ्रमणस्तत्रैव दृप्तसिंहसद्भावाशङ्कायामपि सविस्रम्भं भ्रमेदित्यनुमेयार्थविश्रान्तिनियमहेतुर्बाध्यबाधकभावोऽस्त्येवात्र विशेषः। अवश्यं चैतदभ्युपगन्तव्यम्। अन्यथा शुक्तिकारजतप्रतीत्योरपि क्रमभाविन्योरेतात्पर्य-नुयोगप्रसङ्गः केन वार्यते। तस्माद् बाध्यबाधकभावावसायकृत एवात्रोत्तरार्थविश्रान्तिनियम इति स्थितम्।**[10] अत्रेदमप्याक्षिपति महिमभट्टाचार्यः– **अपि च पूर्वोक्तेऽस्मिनुदाहरणे दारुणतरानितरा- नृक्षप्रभृतीन् प्रसिद्धतद्व्याप्यारानपास्य यदेतत् करिकलभकुम्भनिर्भेदैकहेवाकिनः केसरिणः कौलेयकवधाभिधानमौचित्यैकनिकेतनस्य कवेस्तत्र चिरं चिन्तयन्तोऽप्यभिप्रायं न विद्मः। न हि दृप्ततया यत्किञ्चनकारिणोऽन्यस्यापि स्वजातिसमुचितं चरितमपहायाप्रसिद्धमेव किमपि रसभङ्गीरवः कवयो वर्णयितुमाद्रियन्ते किमुत जगद्विदितव्यापारस्य केसरिणः।**[11]

प्राकृतस्य पद्यमिदं संस्कृतकाव्यशास्त्रे भूयिष्ठां चमत्कृतिमादधाति। नैकेषु ग्रन्थेषु पद्यमिदं कविभिः समादरेण समुदाहृत इति महद्गौरवमस्या भाषायाः। भाषायामस्यां यादृशी व्यङ्ग्यार्थप्रतीतिर्भवति न तादृशी कुत्रचित्। इदमेव वैशिष्ट्यमुररीकृत्य प्राकृतपद्यानि प्रति काव्यशास्त्रिणां विदुषां तावद्बहुमानो विलोक्यते। शब्दार्थयोजना, पदसंघटना, उत्कटो भावबोधः, व्यङ्ग्यार्थरमणीयता, रसपरिपाकश्चात्र भाषायामस्यां साक्षात्क्रियन्ते सहृदयहृदयैः।

हतवृत्तदोषस्योदाहरणं यथा–

**जं परिहरिउं तीरइ मणअं पि ण सुन्दरत्तणगुणेन।**
**अह णवरं जस्स दोसो पडिपक्खेहिं पि पडिवण्णो॥**[12]

उदाहरणमिदं रसाननुगुणं च वृत्तं यत्र तत् हतवृत्तम् इत्यस्य वर्तते। मात्रावृत्ते स्थानविशेषे गणविशेषयोगस्येदमुदाहरणम्। मानवतीं प्रति दूत्यः समाधानोक्तिरियम्। तथाविधमेतत्कामचेष्टितं यत्सौन्दर्यगुणेन रमणीयतारूपेण गुणेन मनागपि परिहर्तुं न शक्यते। अथ च यस्य दोषः पूर्वोक्तापरिहार्यत्वस्वरूपः प्रतिपक्षैरपि ब्रह्मचर्यादिभिः

केवलं प्रतिपन्नोऽङ्गीकृतः न तु परिहृतः। त्वत्कान्तस्य तु कैव कथेति तस्य दैवादन्यवनितासंगमेऽपि कोपातिशयो न विधेय इति भावः। अत्रार्यायां द्वितीयस्य हरिउं इत्यन्तर्गुरोः सगणस्य तीरइ इति तृतीयस्यादिगुरोर्भगणस्य चाश्रव्यत्वं छन्दःशास्त्रसिद्धम्।

वक्तृप्रतिपाद्यव्यङ्ग्यवाच्यप्रकरणादीनां महिम्ना दोषोऽपि क्वचिद्गुणो भवति। अस्मिन्नेव सन्दर्भे उदाहरणमिदमत्थं प्रदर्श्यते। गर्भिततत्वदोषोऽपि क्वचिद् गुणो भवति। यथा–

**हुमि अवहत्थिअरेहो णिरंकुसो अह विवेअरहिओ वि।**
**सिविणे वि तुमम्मि पुणो पत्तिहि भत्तिं ण पसुमरामि॥**[13]

कामं प्रतियौवनस्येयमुक्तिरिति केचित्। मलयानिलादिसहचरसंपत्तौ कामं प्रतीयं तरुणोक्तिरि-त्यन्ये। गुरुं प्रति शिष्योक्तिरित्यपरे। अत्र त्वं प्रतीहीति वाक्यगर्थितत्वं दृढप्रत्ययार्थतया गुणो जातः।

अधमप्रकृत्युक्तिषु ग्राम्यत्वं गुणो भवति। उदाहरणं यथा–

**फुल्लुक्करं कलमकूरिणिहं वहंति जे सिन्धुवारविडवा मह वल्लहा दे।**
**जे गालिदस्स महिसीदहिणो सरिच्छा दे किं च मुद्धविअइल्लपसूणपुंजा॥**[14]

राजशेखरविरचितस्य कर्पूरमञ्जरीसट्टकस्य पद्यमिदं वर्तते। अत्र विदूषकोक्तौ कलमभक्तमहि-षीदधिशब्दा ग्राम्या अपि गुणतामेव प्रस्फुटन्ति।

अर्थान्तरसङ्क्रमितध्वनौ कथितपदत्वदोषो न भवतीति विषयमुल्लिखति स्पष्टतया मम्मटाचार्यः– अस्योदाहरणं यथा–

**ताला जाअंति गुणा जाला दे सहिअएहि घेप्पन्ति।**
**रइकिरणाणुग्गहिआइं होन्ति कमलाइं कमलाइं॥**[15]

विषमबाणलीलायामागतमिदं पद्यम्। भवन्ति कमलानि कमलानि इत्यत्र कमलानि इति द्वितीये सौरभसौन्दर्यादिविशिष्टकमलमित्यस्य विशिष्टार्थस्य बोधकत्वादत्रार्थान्तरसङ्क्रमितवाच्यध्वनिः वर्तते। अतोऽत्र पुनरुक्तिर्नास्ति।

प्रतिकूलानुभावपरिग्रहे दोषो भवति रसस्य । अस्योदाहरणमित्थं दश्यते–

**णिहुअरमणम्मि लोअणपहम्मि पडिए गुरुअणमज्झम्मि ।**
**सअलपरिहारहिअआ वणगमणं एव्व महइ वहू ॥**[16]

अत्र सकलपरिहारवनगमने उभावपि शृङ्गाररसविरोधिशान्तरसस्यानुभावौ स्तः । अत्र एतावपि द्वौ प्रकृतस्य विप्रलम्भशृङ्गारस्य प्रतीतौ बाधकौ स्तः। परन्तु इन्धनाद्यानयनव्याजेनोपभोगार्थं वनगमनं चेत् न दोषः ।

भाषाश्लेषसन्दर्भे संस्कृतप्राकृतयोर्द्वयोः अर्थोऽत्र संगच्छते । आचार्यानन्दवर्धनप्रणीतदेवीशतके पद्यमिदमागतमस्ति । पद्यमिदं यथा–

**महदेसुरन्धम्मे तमवसमासङ्गमागमाहरणे ।**
**हरबहुसरणं तं चित्तमोहमवसरउमे सहसा ॥**[17]

महदे! गौरी! आगमाहरणे वेदविद्योपार्जनानुरागं समासङ्गं सामञ्जस्यं कुरु । चित्तस्याज्ञानं सपदि अपसरतु मे सहसा ।

संस्कृतार्थोऽयम्– हे हरवधू पार्वती! त्वमेका शरणं मम । सर्वदा मे प्रीतिः धर्मे स्यात् तथा तमोवशां तमोगुणायत्ताम् गमागमात्संसारात् शरणं त्वं भवसीति शेषः ।

वाक्यगार्थी- उपमानलुप्ताया उदाहरणमिदं यथा–

**सअलकरणपरवीसामसिरिविअरणं ण सरसकव्वस्स ।**
**दीसइ अह व णिसम्मइ सरिसं अंसंसमेत्तेण ॥**[18]

काव्यं भवत्यत्रोपमेयम्, उपमानं नोच्यते, सकलकरणपरविश्रामश्रीवितरणसाधारणधर्मोऽयम् । सदृशश्चोपमावाचकं पदमिदम् । इदमेव कव्वस्स इत्यत्र कव्वसमम्, सरिसं इत्यत्र णूणं इति पाठेतस्मात् समासगाया उदाहरणमिदं वर्तते । समासगा द्विलुप्तोपमाया इदमुदाहरणं द्रष्टव्यम्, यथा–

**टुण्टुण्णन्तो मरिहसि कण्टअकलिआइं केअइवणाइं ।**

**मालइकुसुमरिच्छं भमर! भमन्तो पाविहिसि ॥**[19]

अत्र मालतीकुसुममुपमेयम्, सदृश इत्युपमावाचको शब्दः । साधारणधर्मोपमानयोः प्रयोगोऽत्र न भवतः । तस्माद् द्विलुप्ताया उदाहरणमिदम् । मालतीकुसुमसदृशम् एकदेशविवर्तिरूपकस्योदाहरणम् इदं यथा–

**जरस रणन्तेउरए करे कुणन्तस्स मण्डलग्गलअम् ।**
**रससंमुही वि सहसा परंमुही होइ रिउसेणा ॥**[20]

अत्र रणस्यान्तःपुरत्वमारोप्यमाणं शब्दोपात्तम् । मण्डाग्रलतायाः नायिकात्वम् । रिपुसेनायाश्च प्रतिनायिकात्वम् अर्थसामर्थ्यादवसीयते इत्येकदेशे विशेषेण वर्तनादेकदेशविवर्ति । प्रकृतार्थप्रतिपाद-कवाच्येन श्लिष्टविशेषणमाहात्म्यात्, न तु विशेषस्य सामर्थ्यादपि, यद् अप्रकृतार्थस्याभिधानं सा समासेन संक्षेपेणार्थद्वयकथनात् समासोक्तिर्भवति । अस्योदाहरणं यथा–

**लहिऊण तुज्झ बाहुप्फंसं जीए स को वि उल्लासो ।**
**ज अलच्छी तुह विरेह ण हूज्जला दुव्वला णं सा ॥**[21]

अत्र विशेष्यवाचिनो जयलक्ष्मीशब्दस्य परमप्रकृतार्थकत्वं नास्ति । अत्र बाहुस्पर्शलाभप्रयुक्तो-ल्लासादिसाधारणविशेषणबलाज्जयलक्ष्मी वृत्तान्तो नायिकावृत्तान्तरूपतया गम्यत इति ।

अतिशयोक्त्यालङ्कारस्य द्वितीयभेदे प्रस्तुतस्यार्थस्यान्यरूपेण भेदो निश्चीयते । समानजातीयं वस्तु तद्भिन्नासमानजातीयमित्युच्यते भेदेऽस्मिन् । यथा-

**अण्णं लडहत्तणअं अण्णा विअ का वि वत्तणच्छाआ ।**
**सामा समाण्णपआवइणो रेह च्चिअ ण रोई ॥**[22]

अत्र लोकप्रसिद्धस्य सौन्दर्यस्य शरीरकान्तेश्च वर्णनमलौकिकरीत्या कविनाकारि । निर्माणपरि-पाटी रेखामात्रेणापि नास्तीति भावः । इयमन्यत्ववर्णनरूपातिशयोक्तिः ।

दीपयति अप्रस्तुतमपि पदार्थं बुद्धौ प्रकाशयति अर्थात् सुन्दरीकरोतीति दीपकः। वस्तुतः प्राकरणिकाप्राकरणिकानामर्थादुपमानोपमेयानां धर्मः क्रियादिः एकवारमेव यदुपादीयते तत् एकस्थस्यैव समस्तवाक्यदीपनाद् दीपकमिति। अयमपि कश्चन अर्थोऽस्य– एकस्थस्यैव सर्ववाक्यप्रकाशत्वेन दीपसाम्याद्दीपकमित्यर्थः। अस्योदाहरणं यथा–

**किवणाणं धणं णाआणं फणमणी केसराईं सीहाणं।**

**कुलवालिआणं त्थणआ कुत्तो छिप्पन्ति अमुआणं॥**[23]

अत्र वर्ण्यत्वेन प्रकृतानां कुलवधूस्तनानां तदुपमानत्वेनाप्रकृतानामन्येषां च कुतः संस्पृश्यन्त इति सकृद्धर्मोपानाद्दीपकालङ्कारः। श्लोकस्यास्य यादृशो भाव आस्ते स नितान्तं हृदयग्राही वर्तते। स्फुटा भाषा, रसपरिपाकः सरसा मधुरिमा चास्य पद्यस्य रञ्जयन्ति मनांसि सचेतसाम्। सर्वमेतत्प्राकृतस्यैव चमत्कारः।

विवक्षितस्य प्राकरणिकत्वादनुपसर्जनीकार्यस्य अशक्यवक्तव्यमतिप्रसिद्धत्वं वा विशेषं वक्तुं निषेध इव यः स वक्ष्यमाणविषय उक्तविषयश्चेति द्विधा आक्षेपो भवति। तत्र प्रथमस्याक्षेपस्य निदर्शनं यथा–

**ए एहि किपि कीएवि कएण णिविवव भणामि अलमहवा।**

**अविआरिअकज्जारंभआरिणी मरउ ण भणिस्सम्॥**[24]

वक्ष्यमाणविषयकस्याक्षेपस्योदाहरणमिदम्। अत्र वियोगिन्या नायिकायाः काचित् सखी नायकमन्तिके सन्देशं गृहीत्वा आगता वर्तते। परन्तु तस्य नायकस्य दशामकथयित्वैव पूर्वमेव सा निषेधयति। अत्र विरहदुर्दशातिशयो वक्ष्यमाणो वक्तुमशक्यतया निषिद्ध इत्याक्षेपालङ्कारः। यत्र सहार्थ-बलादेकार्थाभिधायकमपि यत् उभयस्याप्यवगमकं सा सहोक्तिः। यत्र येषां वस्तूनां सहभावो वर्ण्यते तत्र तेष्वेकं प्रधानम् अपरञ्चाप्रधानं भवति। सहयुक्तेऽप्रधाने इत्यस्मिन् पाणिनीयसूत्रे अप्रधाने तृतीया प्रधाने च प्रथमाविभक्तेः निर्देशो वर्तते।

यथा पुत्रेण सहागतः पिता अत्र पिता वर्तते प्रधानः, अप्रधानश्च पुत्रः। अतः

पुत्रेण इत्यत्र तृतीया, पिता इत्यत्र प्रथमाविभक्तिः। अत्र आगतः इत्यस्याः क्रियायाः साक्षादन्वयो भवति। पुत्रेण इत्यनेन पदेन नैव। अतोऽत्र आगतः पदमिदम् एकार्थसम्बद्धम् एकार्थाभिधायी वर्तते। परन्तु सह इत्यस्मात्पदसामर्थ्यात् पुत्रशब्देन सह तस्य गौणसम्बन्धः कथ्यते। तस्मादयं द्विवाचको भवति। इत्थं यत्र सहशब्दप्रयोगेन काव्योचितचमत्कारविशेषः प्रतीयते तत्र सहोक्तिरलङ्कारः। अस्योदाहरणं यथा प्राकृतनिबद्धं पद्यमिदम्–

**सह दिअहणिसाहिं दीहरा सासदण्डा सह मणिवलयेहि वाप्पधारा गलन्ति।**

**तुह सुहअ विओए तीअ उव्विग्गिरीए सह अ तणुलदाए दुव्वला जीविदासा॥**[25]

अत्र श्वासदण्डेषु दीर्घत्वान्वयः शाब्दो विशेषतौ दिवसनिशादौ साहित्यप्रतीत्या आर्थ इत लक्षणसंगतिः। दिवसादिभिस्तु सहान्वयबलात्।

पर्यायोक्तालङ्कारप्रसङ्गे विषमबाणलीलायामागतमिदमुदाहरणं नितान्तमास्ते। वस्तुत एकं वस्तु क्रमेणानेकस्मिन् भवति क्रियते वा स पर्यायो भवति। एकमनेकस्मिन् क्रियते अर्थात् एकं वस्तु क्रमेण अनेकस्मिन् क्रियते। अस्योदाहरणं यथा–

**तं ताण सिरिसहोअररअणाहरणंमि हिअअमेक्करसम्।**

**बिम्बाहरे पिआणं णिवेसिअं कुसुमबाणेण॥**[26]

अत्र श्रीसहोदररत्नाहरणे इत्यस्मिन् स्थाने श्रीसहोदररत्नाभरणे अयमपि पाठः कुत्रचिल्लभ्यते। श्रीसहोदररत्नं कौस्तुभ आभरणं यस्य तस्मिन् श्रीविष्णौ। हृदयं कुसुमबाणेन प्रियाणां कान्तानां बिम्बसदृशेऽधरे विनिवेशितमित्यनेकत्र स्थितौ प्रयोजकनिर्देशाद्भेदः। न भवति प्राकृतभाषायां लिङ्गव-चनयोः कश्चन नियमः। अत्र राक्षसाणां मनः प्राक् कौस्तुभमणिमवाप्तये समुत्सुकम् आसीदथवा विष्णोः स्वरूपे तत्परमासीत्। अधुना तन्मनो मोहिन्या बिम्बाधरासक्तमजायदिति पर्यायालङ्कारोऽत्र। अर्थयोरे-कक्रियामुखेन परस्परं कारणत्वे सति अन्योन्यनामालङ्कारः। अस्योदाहरणं यथा–

**हंसाणं सरेहिं सिरी सारिज्जइ अह सराण हंसेहिं।**
**अण्णोण्णं विंअ एए अप्पाणं णवर गरुअन्ति ॥**[27]

अत्र सरोहंसयोः परस्परं शोभासारीकरणरूपोपकारजनकत्वादन्योन्यं नामालङ्कारः। उत्तर-श्रुतिमात्रेण यत्र प्रश्नकल्पना क्रियते तथा च यत्र प्रश्ने सत्यसकृदसम्भाव्यमुत्तरं स्यात् तदुत्तरालङ्कारो भवति। प्रतिवचनोपलम्भादेव पूर्ववाक्यं प्रश्नो वा यत्र कल्प्यते तदेकं भवति तावदुत्तरम्। यथा—

**वाणिअअ हत्थिदन्ता कुत्तो अम्हाणं वग्धकित्ती अ।**

**जाव लुलितासअमुही धरम्मि परिसक्कए सोण्हा ॥**[28]

हस्तिदन्तव्याध्रकृत्तीनामहमर्थी ता मूल्येन प्रयच्छेति क्रेतुर्वचनम् अमुना वाक्येन समुन्नीयते। प्रश्नादनन्तरं लोकातिक्रान्तगोचरतया यदसम्भाव्यरूपं प्रतिवचनं स्यात्तदपरमुत्तरम्। अनयोश्च सकृदु-पादाने न चारुताप्रतीतिरित्यसकृदित्युक्तं यथा—

**का विसमा देव्वगई किं लद्धं जं जणो गुणग्गाही।**

**किं सोख्खं सुकलत्तं किं दुक्खं जं खलो लोओ ॥**[29]

अत्र दैवगत्यादेर्वैषम्यादि लोकप्रसिद्धमेव प्रकाशते। वाच्यार्थ एवात्र विश्रान्तिः विलोक्यते।

यद्देशं कारणं तद्देशमेव कार्यमिति नयः। यत्र धूमः तत्र वह्निः। यत्र तु कार्यकारणभूतयोर्द्वयोर्ध-र्मयोः केनाऽप्यतिशयेन नानादेशतया युगपदवभासनम्, सा तयोः स्वभावोत्पन्नपरस्परसङ्गतित्यागाद-सङ्गतिः नाम अलङ्कारो भवति। अस्योदाहरणमित्थं प्रदर्श्यते—

**जस्सेअ वणो तस्सेअ वेअणा भणइ तं जणो अलिअं।**

**दणतक्खअं कवोले बहूए वेणआ सवत्तीणं ॥**[30]

अत्र शारीरमानसयोर्वेदनयोरेकत्वाध्यवसायो मूलम्। अत्र वेदनादन्तक्षतयोः कार्यकारणयोर्वैय-धिकरण्यरूपासंगतिरलङ्कारः। वैयधिकरण्येन प्रतीतिबलाद्यत्र

समानाधिकरणानां धर्माणां प्रतीत्या विरोधस्वीकरणं भवति तत्रैवासङ्गतिः ।

यः पदार्थः केनचिदाकारेण नियतो यदा कदाचिदनुभूतोऽभूत्, स कालान्तरे स्मृतिप्रतिबोधाधा-यिनीति तत्समाने वस्तुनि दृष्टे सति यत्तथैव स्मर्यते। तद्भवेत्स्मरणमिति । यथा–

**करजुअगहिअजसोआत्थणमुहविणिवेसिआहरपुडस्स ।**

**सम्भरिअपञ्चजण्णस्य णमह कण्हस्स रोमाञ्चं ॥**[31]

अत्र जन्मान्तरानुभूतस्मरणमिति ।

उपमानस्य यत्र व्यर्थतायाः प्रतिपादनं क्रियते अर्थात् अस्य धुरं सुतरामुपमेयमेव वोढुं प्रौढमिति कैमर्थ्येन यदुपमानामाक्षिप्यते तत्र भवति प्रतीपालङ्कारः। यदपि तस्यैवोपमानतया प्रसिद्धस्य उपमाना-न्तरविवक्षयाऽनादरार्थमुपमेयभावः कल्प्यते, तदुपमेयस्योपमानप्रतिकूलवर्तित्वादुभयरूपं प्रतीपम् ।

द्वितीयस्य प्रतीपस्योदाहरणं यथा–

**ए एहि दाव सुन्दरि कण्णं दाऊण सुणसु वअणिज्जम् ।**

**तुज्झ मुहेण किसोअरि चन्दो उअमिज्जइ जणेण ॥**[32]

अत्र मुखेनोपमीयमानस्य शशिनः स्वल्पतरगुणत्वात् उपमित्यनिष्पत्त्यां वअणिज्जम् इति वचनीयपदाभिव्यङ्ग्यतिरस्कारः ।

यत्र एकमपि वस्तु यत् एकेनैव स्वभावेन युगपदनेकत्र भवति तत्र द्वितीयो विशेषालङ्कारो भवति- अस्योदाहरणं यथा–

**सा वसइ तुज्झ हिंअए सा च्चिंअ अच्छीसु सा अ वअणेसु ।**

**अह्मारिसाण सुन्दर ओअसो कत्थ पावाणं ॥**[33]

अत्रैकस्याः कामिन्या एकरूपेण युगपदनेकत्र स्थितिवर्णनादपरो भेदः। अत्युज्ज्वलगुणयोगेऽपि यदि न्यूनगुणोऽप्रकृतः प्रकृतस्य गुणं नानुहरति तदा

अतद्गुणालङ्कारो भवति । निदर्शनं यथा–

**धवलोऽसि जहवि सुन्दर तहवि तुए मज्झ रज्जिअं हिअअं ।**

**राअभरिए वि हिअए सुहअ णिहित्तो ण रत्तोसि ॥**[34]

अत्रोत्तरार्धेऽप्रस्तुतेन गायकेन निवेदनीयवृत्तान्ततया प्रकृतस्य हृदयस्य गुणाननुहरणादतद्गु-णोऽलङ्कारः ।

यत्र नैकेऽलङ्काराः परस्परं निरपेक्षरूपतया स्थिता भवन्ति तत्र संसृष्टिः । शब्दार्थालङ्कारयोः संसृष्टिर्यथा–

**सो णत्थि एत्थ गामे जो एअं महमहन्तलाअण्णं ।**

**तरुणाण हिअअलूडिं परिसक्कन्तीं णिवोरेइ ॥**[35]

अत्र "णत्थि एत्थ " इत्यत्र त्थ इत्यस्यानुप्रासः पुनश्चोत्तरार्द्धे हिअअलूडिं(हृदयलुण्ठाकीम्) अत्र रूपकालङ्कारो वर्तते। संसृष्टिश्च तयोरेकत्र वाक्ये छन्दसि वा समवेतत्वात् ।

द्वयोर्बहूनां वा अलङ्काराणामेकत्र समावेशेऽपि विरोधान्न यत्र युगपदवस्थानं न चैकतरस्य परिग्रहे साधकं तदितरस्य वा परिहारे बाधकमस्ति येनैकतर एव परिगृह्येत स निश्चयाभावरूपो द्वितीय सङ्करः सन्देहसङ्करो भवति ।यथा–

**जह गहिरो जह रअणणिब्भरो जह अ णिम्मलच्छाओ ।**

**तह किं विहिणा एसो सरसवाणीओ जलविहीण किओ ॥**[36]

अत्र किं समुद्रे श्लिष्टविशेषणमहिम्नाप्रस्तुतपुरुषविशेषप्रतीतेरियं समासोक्तिः, किं वाब्धेरप्रस्तु-तात्प्रस्तुतस्य पुरुषविशेषस्य तत्समानगुणतया प्रतिपत्तेरप्रस्तुतमिति संदेहः । तस्मादत्रायं द्वयोः सङ्करः ।

इत्थमियं भाषा गौरवस्य सौष्ठवस्य माधुर्यस्य सौभाग्यस्य औदार्यस्य गाम्भीर्यस्य नैर्मल्यस्य मार्दवस्य चाधिष्ठानवनीति सप्रमोदमुपच्छन्दिता, हृदयपरिष्करणाय चाप्रतिद्वन्द्वं प्रभुरिति सत्यतमनि-न्दिता चेति नात्र विस्तारयितुमावश्यकम्। भाषायामस्यां महतीं

प्रीतिं प्रदर्शयन् राजानको मम्मटः प्राकृतप्रियः इति नाम्ना कविकुले प्रसिद्धिमवाप। धन्येयं भाषा, धन्यश्च प्राकृतप्रियो मम्मटः, धन्याश्च प्राकृतपाठकाः।

## पादटिप्पणी

1. नवमर्थदर्शनं सन्निवेशशिशिरा बन्धर्द्धयः।
अविरलमेतदाभुवनबन्धमिह केवलं प्राकृते॥ गउडवहो

2. गूढार्थदेशरहितं सुललितवर्णैविरचितं रम्यम्।
प्राकृतकाव्यं लोके कस्य न हृदयं सुखयति॥
पञ्चमीमाहात्म्यम्(महेश्वरसूरिः)

3. पुरुषाः संस्कृतबन्धाः प्राकृतबन्धोऽपि भवति सुकुमारः।
पुरुषमहिलानां यावदिहान्तरं तावदेतेषाम्॥ कर्पूरमञ्जरी

4. ललिते मधुराक्षरे युवतिजनवल्लभे सशृङ्गारे।
सति प्राकृतकाव्ये क शक्नोति संस्कृतं पठितुम्॥
वज्जालग्ग

5. वानीरकुञ्जोड्डीन शकुनिकोलाहलं शृण्वन्याः।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि॥ काव्यप्रकाशः, 5/132

6. कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्।
सभ्रमरपद्माघ्रायिणि वारितवामे सहस्वेदानीम्॥ तत्रैव, 5/135

7. श्वश्रूरत्र निमज्जति अत्राहं दिवसके प्रलोकय।
मा पथिक रात्र्यन्ध शय्यायां मम निमंक्ष्यसि॥ तत्रैव, 5/136

8. विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम्।
हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयति॥ तत्रैव, 5/137

9. भ्रम धार्मिक विश्वस्तः स शुनकोऽद्य मारितस्तेन।
गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन॥ तत्रैव, 5/138

10. व्यक्तिविवेकः, ध्वनिखण्डनप्रसङ्गे

11. तदेव

12. यत् परिहर्तुं तीर्यते मनागपि न सुन्दरत्वगुणेन।
अथ केवलं यस्य दोषः प्रतिपक्षैरपि प्रतिपन्नः॥
काव्यप्रकाशः,7/217

13. भवाम्यपहस्तितरेखा निरङ्कुशोऽथ विवेकरहितोऽपि।
स्वप्नेऽपि त्वयि पुनः प्रतीहि भक्तिं न प्रस्मरामि॥ तत्रैव, 7/321

14. पुष्पोत्करं कलमभक्तनिभं वहन्ति
ये सिन्धुवारविटपा मम वल्लभास्ते।
ये गालितस्य महिषीदध्नः सदृक्षास्ते
किं च मुग्धविचकिलप्रसूनपुञ्जाः॥ तत्रैव, 7/310

15. तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते।
रविकिरणानुगृतीतानि भवन्ति कमलानि कमलानि॥
तत्रैव, 7/316

16. निभृतरमणे लोचनपथे पतिते गुरुजनमध्ये।
सकलपरिहारहृदया वनगमनेवेच्छति वधूः॥ तत्रैव, 7/329

17. मम देहि रसं धर्मे तमोवशाम् आशां गमागमात् हर नः।
हरबधु शरणं त्वं चित्तमोहोऽपसरतु मे सहसा॥तत्रैव, 9/373

18. सकलकरणपरविश्रामश्रीवितरणं न सरसकाव्यस्य।
दृश्यतेऽथवा निशम्यते सदृशमशांशमात्रेण॥
तत्रैव,10/401

19. टुण्टुणायमानो मरिष्यसि कण्टककलितानि केतकीवनानि ।

मालतीकुसुमसदृशं भ्रमर भ्रमन् न प्राप्स्यसि ॥तत्रैव, 10/408

20. यस्य रणान्तःपुरे करे कुर्वतो मण्डालाग्रलताम् ।

रससम्मुख्यापि सहसा पराङ्मुखी भवति रिपुसेना ॥तत्रैव, 10/423

21. लब्ध्वा तव बाहुस्पर्शः यस्याः स कोऽप्युल्लासः ।

जयलक्ष्मीस्तव विरहे न खलूज्ज्वला दुर्बला ननु सा ॥ तत्रैव, 10/435

22. अन्यत् सौकुमार्यमन्यैव च कापि वर्तनच्छाया ।

श्यामा सामान्यप्रजापतेः रेखैव च न भवति ॥तत्रैव, १०/४५१

23. कृपणानां धनं नागानां फणमणिः केसराः सिंहानाम् ।

कुलबालिकानां स्तनाः कुतः स्पृश्यन्तेऽमृतानाम् ॥तत्रैव, 10/458

24. ए एहि किमपि कस्या अपि कृते निष्कृप! भणामि अलमथवा ।

अविचारितकार्यारम्भकारिणी म्रियतां न भणिष्यामि ॥ तत्रैव, 10/472

25. सह दिवसनिशाभिः दीर्घाः श्वासदण्डाः

सह मणिवलयैर्बाष्पधारा गलन्ति ।

तव सुभग! वियोगे तस्या उद्विग्नायाः

सह च तनुलतया दुर्बला जीविताशा ॥तत्रैव, 10/496

26. तत्तेषां श्रीसहोदररत्नाहरणे हृदयमेकरसम् ।

बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन ॥तत्रैव, 10/516

27. हंसानां सरोभिः श्रीः सार्यतेऽथ सरसां हंसैः ।

अन्योन्यमेवैत आत्मानं केवलं गुरूकुर्वयन्ति ॥ तत्रैव, 10/528

28. वाणिजक! हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च ।

यावत् लुलितालकमुखी गृहे परिष्वक्कते स्नुषा ॥तत्रैव, 10/529

29. का विषमा दैवगतिः किं लब्धव्यं यत् जनो गुणग्राही ।

किं सौख्यं सुकलत्रं किं दुःखं यत् खलो लोकः ॥तत्रैव,10/530

30. यस्यैव व्रणस्तस्यैव वेदना भणति तज्जनोऽलीकम् ।

दन्तक्षतं कपोले वध्वा वेदना सपत्नीनाम् ॥तत्रैव, 10/534

31. करयुगगृहीतयशोदास्तनमुखविनिवेशिताधरपुटस्य ।

संस्मृतपाञ्चजन्यस्य नमत कृष्णस्य रोमाञ्चम् ॥तत्रैव, 10/552

32. अयि एहि तावत् सुन्दरि! कर्णं दत्त्वा शृणुष्व वचनीयम् ।

तव मुखेन कृशोदरि! चन्द्र उपमीयते जनेन ॥तत्रैव, 10/555

33. सा वसति तव हृदये सैवाक्षिषु सा च वचनेषु ।

अस्मादृशीनां सुन्दर! अवकाशः कुत्र पापानाम् ॥तत्रैव, 10/561

34. धवलोऽसि यद्यपि सुन्दर! तथापि त्वया मम रञ्जितं हृदयम् ।

रागभरितेऽपि हृदये सुभग! निहितो न रक्तोऽसि ॥ तत्रैव, 10/565

35. स नास्त्यत्र ग्रामे य एनां महमहायमानलावण्याम् ।

तरुणानां हृदयलुण्ठाकीं परिष्वक्कमानां निवारयति ॥ तत्रैव, 10/570

## सन्दर्भग्रन्थसूचिः


1. गाथासप्तशती, भट्टश्रीमथुरानाथशास्त्री, मोतीलाल बनारसीदास, दिल्ली, पुनर्मुद्रण, 1983

2. काव्यप्रकाश, आचार्यविश्वेश्वर, ज्ञानमण्डल लिमिटेड, वाराणसी, जून 2005

3. ध्वन्यालोकः, आचार्यजगन्नाथपाठकः, चौखम्बाविद्याभवनम्, वाराणसी, 2011

4. व्यक्तिविवेकः, जयकृष्णदास हरिदासगुप्त, चौखम्बा संस्कृत सीरीज ऑफिस, बनारस, 1936

5. प्राकृतव्याख्याावृत्तिः, श्रीत्रिविक्रमदेवः, जयकृष्णदासहरिदासगुप्ता, चौखम्बा संस्कृत सीरिज ऑफिस, संवत् 2007

6. काव्यप्रकाशः(बालबोधिनीटीका), भट्टवामनाचार्यः, परिमल पब्लिकेशन्स, दिल्ली,2008

7. काव्यप्रकाशः(सोलह टीकाओं सहित), डॉ. ज्योत्स्ना मोहन, नाग प्रकाशक, दिल्ली, प्रथम संस्करण 1995

8. कर्पूरमञ्जरी, पं. दुर्गाप्रसाद तथा वासुदेवलक्ष्मण शास्त्री पणशीकरः, निर्णय सागर प्रेस, बोम्वे, 1927

9. ज्ञानपञ्चमीकथाः(श्रीमहेश्वरसूरिकृताः), आचार्य जिनविजयमुनि, भारतीयविद्याभवन, बम्बई, 1949

10. प्राकृत रत्नाकर – प्रो. प्रेम सुमन जैन, प्राकृत अध्ययन एवं संशोधन संस्थान, श्रवणबेलगोला, कर्नाटक, 2012

11. प्राकृत भाषा और व्याकरण के विविध आयाम, प्रो. राधावल्लभ त्रिपाठी,रा.,सं, सं,नव देहली,2010

12.प्राकृत साहित्य की रूपरेखा,डा.तारा डागा,प्राकृत भारती,जयपुर,2006

13.प्राकृत साहित्य का इतिहास,डा.जगदीश चन्द्र् जैन,चौखम्बा विद्या भवन,वाराणसी,1995

# श्रीशाण्डिल्येनाथर्वणात्प्राप्तब्रह्मविद्या |

केशवकुमारः मन्था


## सारांशः |

परब्रह्मा श्रीमद्दत्तात्रेयः निर्गुणनिराकारः सच्चिदानन्दरूपमेकमेवाद्वितीयः भक्तानुद्धर्तुं सगुणसाकाररूपेण नैकावताराङ्गृहीत्वा अधिकारतारतम्येन ज्ञानभक्तिवैराग्यमष्टाङ्गयोगश्च भक्तानुपदिश्य तान्कृतार्थान्कारयामास | स परमात्मा ब्रह्मविष्णुमहेश्वरेति पृथक्पृथग्रूपैः जगदुत्पत्तिस्थितिलयं कारयन् श्रीमद्दत्तात्रेयरूपेण जगन्नियन्त्रणार्थमात्मानमभिव्यञ्जयति पूर्वमभिव्यक्तः आगामिकालेऽपि अभिव्यञ्जयिष्यति |

स्वधर्मोचित नित्यनैमित्तिककर्मानुष्ठानैर्योगसाधनैः साधनचतुष्टैः भक्त्युपासनामार्गैश्च तथा गुरूपदिष्टमहावाक्यश्रवणमनननिदिध्यासनैरेव मोक्षं लभते इति श्रीमद्दत्तात्रेयः सच्चिदानन्दसद्गुरुः मुमुक्षूनुपदिशति |

स्वस्वरूपज्ञानेनैव मोक्षप्राप्तिर्भवति न तु केवलपदार्थज्ञानेन | ब्रह्मवेत्तेनैव मोक्षप्राप्तिः न तु केवलकर्माचरणेन | लौकिकदुःखः क्षणिकः तस्य निवृत्तिरपि क्षणिकः | अर्थादद्वितीयात्मज्ञानेनैव शोकं तीर्त्वा अखण्डसुखप्राप्तिः सम्भवति | सर्वजीवेषु आत्मा एकमेव यथा एकश्चन्द्रस्य प्रतिबिम्बः जलेऽनेकवद्भासते तथैव आत्मा एकोऽपि नानारूपवद्गोचरीभवति | तस्मादात्मद्रष्टा एव मोक्षं लब्धुं शक्यते इति स्वामिना प्रतिपादितः |

परमपूज्य श्रीवासुदेवानन्दसरस्वतीटेम्बेस्वामिना संस्कृतभाषायां श्रीमद्दत्तपुराणं विरच्य महोत्तरलोकोपकारणं कारयामास | तत्र श्रीमद्दत्तात्रेययोगिना अथर्वणयोगिना च प्राप्त ब्रह्मज्ञानं तथा अथर्वणेन शाण्डिल्यमुपदिष्ट ब्रह्मज्ञानं सर्वेषां कृते फलीभवन्तीत्याशासे |

## प्रस्तावना

यावत्पर्यन्तमीश्वरानुग्रहं न भवति तावत्पर्यन्तं मानवानां समीचीनं शास्त्रज्ञानं तथा सद्गुरुः न लभन्ते ।[1] ईश्वराराधनबुद्ध्या स्वधर्माचरणेन सज्जनानां परमेश्वरीप्रसादेनैव सद्गुरोः प्राप्तिः सुकरं भवति ।[2] सद्गुरोरनुग्रहेणैव साधकस्य सञ्चित पापराशी भस्मीभवति । सद्गुरु प्रसादितज्ञानस्य श्रवणमनननिदिध्यासनेन संशयभावनानां असम्भावनानां तथा च विपरीतभावनानां निरसनमुत्पद्यते । तस्मात् मोक्षप्राप्तिः द्राकिति सिद्धयति ।[3]

परमेश्वरस्य कृपाप्रसादेनैव सद्गुरोः दर्शनभाग्यं तथा च तस्य प्राप्तिर्भवति नान्यत्साधनैः शक्यते । परमेश्वरस्वरूपस्य यथार्थज्ञानं सदुरुविना असम्भवम् । यथा सद्गुरोः प्राप्तेः ईश्वराराधनबुद्ध्या मानवाः यतन्ते तथैव नित्यनैमित्तिक-स्वधर्मोचितकर्मानुष्ठानमाचरेयुः । इदमेव धर्माचरणमिति कथ्यन्ते बुधैः । मानवाः सम्यग्धर्माचरणैः स्वरूपाभिमानरहिताः भूत्वा कर्मफलापेक्षापि न काङ्क्ष्येयुः । ईदृक् स्वधर्माचरितसज्जनानामेव परमेश्वरानुग्रहं लभ्यते । तदनुग्रहेणैव यथार्थज्ञानबोधकसद्गुरुः प्राप्यते ।

---

[1]श्रीवासुदेवानन्दसरस्वतीटेम्बेस्वामी. (१९५४). श्रीदत्तपुराणम् श्रीवासुदेवानन्दसरस्वतीतेम्बेस्वामीकृत सटीकम् (संस्कृतम्). पुणे: श्रीवामन दत्तात्रेय कुलकर्णी, नारायण पेठ, 'यावन्न जायते साक्षादीश्वरात्समनुग्रहः । सच्छास्त्रं सद्गुरुश्चापि तावल्लभ्यः कुतो नृणाम् ॥' (द.पु.१.३.३)

[2] तत्रैव, 'ईश्वराराधनधिया स्वधर्माचरणात्सताम् । ईशप्रसादस्तद्रूपः सुलभश्चात्र सद्गुरुः ॥' (द.पु.१.३.४)

[3]तत्रैव, 'सद्गुरोः सम्प्रसादोऽस्य प्रतिबन्धक्षयस्ततः । दुर्भावनातिरस्काराद्विज्ञानं मुक्तिदं क्षणात् ॥' (द.पु.१.३.५)

**शाण्डिल्याथर्वसंवादः**

वेदवेदाङ्गशास्त्रनिपुणः स्वाश्रमोचितनित्यनैमित्तिककर्मानुष्ठानपरः शाण्डिल्याख्यातः मन्त्रद्रष्टामहर्षीबभूव | श्लोके अथ शब्दः मङ्गलार्थवाचकः शुभङ्करः सकलार्थसाधकः भवति |[4] आत्यन्तिकाव्यभिचारभक्त्या ज्ञानगर्भवैराग्येन संन्यास्यदीक्षामाचरितः शाण्डिल्यः अथर्वणचरणौ नमस्कृत्य 'हे भगवन् ब्रह्मविद्यां मामनुग्रहीतुं ब्रह्मविद्यां स्मारयेत्' इति प्रार्थयाञ्चकार |[5]

**श्रीमद्दत्तात्रेयगुरुस्तुतिः**

आदौ ज्ञानप्राप्तेः पश्चात्कृतपापनिवृत्त्यर्थमाजीवितं वेदान्त-ईश्वर-गुरूणां सेव्यमानमिति अथर्वण ऋषिः प्राह | श्रीमद्दत्तात्रेयेन अनुशासितवचनान्मनसि निधाय उपरोक्तत्रयाणामाजीवनं सेव्यमानेन सर्वसिद्धिं भवतीति अथर्वण महर्षी सम्यग्ज्ञात्वा श्रीदत्तमहात्म्यं कथयाञ्चकार |[6]

अजरामरः अन्नमयादिकोशाद्विलक्षणः त्रिकालातीतः बुद्धिगुणवत्तः आनन्दरूपः जगत्कारणः पापहारकः देहत्रयातीतः इति श्रीमद्दत्तात्रेयस्य पादपद्मादतिरिक्तः नान्यत्किमप्यस्ति जगति | इत्यथर्वणमहर्षिः आदौ श्रीमद्दत्तात्रेयं सर्वसाक्षिकं सर्वद्वैतभ्रमस्याधिष्ठानं परमान्दरूपं निरस्तसमस्तानर्थरूपं स्वप्रकाशचिद्रूपब्रह्माणं तुष्टाव | तेन ब्रह्म तथा विवर्तरूपेण स्थितजडप्रपञ्चस्यास्तित्वं रज्जुसर्पन्यायेन अध्यारोपापवादैः समानाधिकरणं सिद्ध्यते | तदा जीवब्रह्मैक्यज्ञानं स्वयमेवोत्पद्यते |[7]

---

[4] श्रीवासुदेवानन्दसरस्वतीटेम्बेस्वामी. (१९५४). श्रीदत्तपुराणम् श्रीवासुदेवानन्दसरस्वतीतेम्बेस्वामीकृत सटीकम् (संस्कृतम्). पुणेः श्रीवामन दत्तात्रेय कुलकर्णी, नारायण पेठ, 'अथ शाण्डिल्यनामासीद्ब्रह्मर्षिर्वै महामुनिः | वेदवेदाग्डशास्त्रज्ञः स्वाश्रमोचितकर्मकृत् ||' (द.पु.१.६.२२)

[5] तत्रैव, 'विद्याप्राप्तिमथर्वाणमुपसत्रो महामतिम् | सोऽविभाद्याह भगवन्ब्रह्मविद्यामधीहि मे ||' (द.पु.१.६.२५)

[6] तत्रैव, 'आजीवितं त्रयः सेव्या वेदान्तो गुरूरीश्वरः | पूर्व ज्ञानाप्तये पश्चात्कृतघ्नत्वनिवृत्तये ||' (द.पु.१.६.२)

[7] तत्रैव, 'तदजरामर कोशविलक्षणं सदज श्रीगुणवेतृ कलक्षणम् | भुवनहेत्वघहत्त्रिपुराधिकं तव न जातु पदं कुपुराधिकम् ||' (द.पु.१.६.१८)

ज्ञानगर्भवैराग्यः द्विविधमिति बुधाः मन्यन्ते | प्रथमः केवल दुःखपरम्परया तथा च दुःखभोगेनोत्पद्यते | द्वितीयस्तु ईषणत्रयलोभेनोत्पद्यते अर्थात् लोकेषण वित्तेषण पुत्रेषण एते लोभरहितत्वाद्वैराग्यं जन्यते | तर्केण स्वबुद्ध्यभ्यूहमात्रेण ब्रह्मज्ञानं न सिध्यति | केवलमनुभवसिद्धाभेददर्शी आचार्योपदेशेनैवात्मज्ञानं लभ्यते |[8] गुरुणा एव विद्याप्राप्तिर्भवतीति |[9]

सा विद्या अपरोक्षसाक्षात्कारलक्षणात्मका जीवब्रह्मैक्यप्रत्यक्षानुभवमेव इयं विद्या | ब्रह्मविद्यायाः अध्ययनाध्यापनान्यविद्याशिक्षणवन्नास्ति |[10] गुरुणा केवलमात्मविद्यायाः स्मरणमात्रेण शिष्यस्य सन्देहनिवृत्तिः कारयति | तस्मात् शाण्डिल्यः अथर्वऋषीं स्वकृते आत्मविद्यां स्मारयत्विति प्रार्थयामास |

ईदृशः शिष्यशाण्डिल्येन यदा संस्पृष्टः अथर्वमहायोगी प्राह | त्यागपूर्वक श्रद्धाभक्ति ध्यानयोगानुसारेण ब्रह्मविद्यायाः ज्ञानमुत्पद्यते |[11] ब्रह्मविद्यायाः श्रवणं संन्यासानन्तरमेव कुर्यादिति | संन्यासः द्विविधः प्रोक्तः विद्वत्संन्यासः विविदिषासंन्यासश्चेति | विद्वत्संन्यासे कर्मफलानासक्तिः विद्यते | यतः कर्मसंन्यासेन स्वस्वरूपज्ञानकाङ्क्षिणां मुमुक्षूणां ज्ञानलाभेत्यपेक्षाकारणात्तदसाधु | यथोचितकर्म अक्रियमाणेऽन्तःकरणशुद्धेरनुपपत्तिरपि | अतः ज्ञानोत्पत्तिरसम्भवम् | तस्मात्

---

[8] कठोपनिषत्. (२०१७). Gorakhpur: Geeta Press, 'नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ | यां त्वमापः सत्यधृतिबतासि त्वादृङ्नो भूयान्नचिकेतः प्रष्ठा ||' (क.उप.१.२.९)

[9] छान्दोग्योपनिषत्. (२०१७). Gorakhpur: Geeta Press, 'आचार्यवान्पुरुषो वेद' (छा.उप.६.१४.२),

[10] Swāmī Nikhilananda. (2010). दक्षिणामूर्तिस्तोत्रम्. New Delhi: Advaita Ashram, Uttarakhand. 'चित्रं वटतरोर्मूले वृद्धाः शिष्याः गुरुर्युवा | गुरोस्तु मौनं व्याख्यानं शिष्यास्तु छिन्नसंशयाः ||'(द.स्तो.३)

[11] श्रीवासुदेवानन्दसरस्वतीटेम्बेस्वामी. (१९५४). श्रीदत्तपुराणम् श्रीवासुदेवानन्दसरस्वतीतेम्बेस्वामीकृत सटीकम् (संस्कृतम्). पुणे: श्रीवामन दत्तात्रेय कुलकर्णी, नारायण पेठ, 'इति शिष्येण सोऽथर्वा संस्पृष्टः प्राह सोम्य ताम् | श्रद्धाभक्तिध्यानयोगादवेहि त्यागपूर्वकम् ||' (द.पु.१.६.२७)

कर्मत्यागापेक्षया कर्मफलत्यागः उत्कृष्टः इति सूचितः | स्मृतिवचनैः कर्मफलत्यागं वर्णितम्|[12]

विदिताविदिताद्विलक्षणं ज्ञात्यादि त्रिपुटिवर्जितं स्वयम्प्रकाशरूपं ज्ञानलक्षणं ब्रह्मेति ज्ञातव्यम्|[13] इन्द्रियैर्यदवगम्यते तद्विदितम्| जाग्रद्स्वप्नाद्विलक्षणमविदितम्| किन्तु विदिताविदिताद्विलक्षणं त्रिपुटी | ज्ञाता ज्ञानं तथा त्रिपुटेः विलक्षणमिति त्रिपुटीवर्जयेयुः | अर्थादपरोक्षेति ज्ञानलक्षणमस्ति | स्वयम्प्रकाशरूपमिति चिद्रूपम्| ज्ञानमेव सच्चिद्रूपमिति | चिदेव सत्तथा सदेव चिदिति ज्ञातव्यम्| सर्वात्मकः इति एकविभूत्याः अनन्तलक्षणम् | ब्रह्म देशकालवस्तुपरिच्छिन्नः |[14] स एकमेवाद्वितीयमखण्डं सजातीयादिभेदवर्जितमिति श्रुतिवाक्यम्|[15]

## जगदुत्पत्तिस्थितिलयकारणम्

आत्मा अक्रियः अविकारी इति चेत् दृश्यमाननामरूपात्मकजगतः आरम्भकत्वमारोपयितुमसम्भवमेव | अपि च निरंशः अविकारी आत्मा जगतः परिणाममित्यनुपपत्तिः |[16]

---

[12] श्रीमद्भगवद्गीता, (२०१६\). Gorakhpur: Geeta Press, 'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते | योगारूढस्य तस्यैव शमः कारणमुच्यते ||' (भ.गी.६.३) 'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः | स संन्यासी च योगी च न निराग्निर्न चाक्रियः ||' (भ.गी.६.१), 'कर्मेन्द्रियाणि सम्यम्य य आस्ते मनसा स्मरन्| इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ||' (भ.गी.३.६)

[13] श्रीवासुदेवानन्दसरस्वतीटेम्बेस्वामी. (१९५४). श्रीदत्तपुराणम् श्रीवासुदेवानन्दसरस्वतीतेम्बेस्वामीकृत सटीकम् (संस्कृतम्). पुणे: श्रीवामन दत्तात्रेय कुलकर्णी, नारायण पेठ, 'विदिताविदितान्यत्वं त्रिपुटीपरिवर्जितम् | स्वयंप्रकाशरूपं तज्ज्ञानलक्ष्मास्य केवलम् ||' (द.पु.१.६.२९)

[14] तत्रैव, 'देशतः कालवस्तुभ्यां परिच्छेदो यतोऽस्य नो | विभोरेकस्य चानन्तलक्ष्म सर्वात्मकस्य च ||' (द.पु.१.६.३०)

[15] तत्रैव, 'सत्यं ज्ञानमनन्तं चेत्युक्तं तद्ब्रह्मलक्षणम् | इदमेकं चाद्वितीयं यत्सदा भेदवर्जितम् ||' (द.पु.१.६.३१), तैत्तिरीयोपनिषत्, (२०१७). Gorakhpur: Geeta Press 'सत्यंज्ञानमनन्तमिति ब्रह्मलक्षणम् (तै.उप.३.१.१), अरविन्दोपनिषत्. (n.d.). Retrieved from sanskritdocuments.org: www.sanskritdocuments.org 'ॐ। एकमेवाद्वितीयं ब्रह्म सदसद्रूपं सदसदतीतं नान्यत् किञ्चिदस्ति |' (अर.उप.१), छान्दोग्योपनिषत्. (२०१७). Gorakhpur: Geeta Press, 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्| तस्मादसतः सज्जायत |' (छा.उप.६.२.१)

[16] श्रीवासुदेवानन्दसरस्वतीटेम्बेस्वामी. (१९५४). श्रीदत्तपुराणम् श्रीवासुदेवानन्दसरस्वतीतेम्बेस्वामीकृत सटीकम् (संस्कृतम्). पुणे: श्रीवामन दत्तात्रेय कुलकर्णी, नारायण पेठ, 'जगदारम्भकत्वं नो घटतेऽस्याक्रियस्य हि | परिणामोऽपि न सतो निरंशस्याविकारिण ||' (द.पु.१.३.१०)

यथा कुलालः घटस्योपादानकारणं भवति तद्वत् सत् विश्वस्यारम्भकारणमिति वक्तुमयुक्तम् | कुलालसाम्येन आत्मनः सदधिष्ठानकारणात् निरंशत्वात्कार्यानुपपत्तिः | परिणामेन विश्वं भवतीति परिणामकारणवादीनां कथनमप्ययुक्तमेव | क्षीरस्य परिणामः दधिः यतः क्षीरः तदंशमेव | किन्तु ब्रह्मा निरंशः एव | सतेः परिणामं विश्वमिति मन्यमाने द्वैतापत्तिर्भवति | अर्थात् सद्विश्वस्योः समत्वमुपपद्यते |[17] तस्मादात्मा ऊर्णनाभिवत्स्वमायया जगतः उपादानं तथा च निमित्तकारणमपि भवति |[18] इदं दृश्यमानं जगत्तु केवलं लीलास्वरूपमितिति श्रुतिवचनात्|[19]

यद्यपि आत्मा अविकारी तथापि एकदेशया स्वमायया जगदिदं निर्माति | अत्र एकदेशशब्दः मायार्थीति अभिप्रेतः | 'पादोऽस्य विश्वाभूतानि' (ऋ.१०.९०) इति पुरुषसूक्ते दर्शितत्वात् | अत्र ऊर्णनाभ्युदाहरणेन जगदुपादाननिमित्तकारणयोरभिन्नत्वं दर्शयति |[20] घटस्य उपादानकारणं मृत्तिका | कुलालः कुम्भस्य निमित्तकारणः | भासमानमिदं जगतः उपादानकारणमात्मा | आत्मा एकोऽपि अनादिमायाशक्तिवशात् बहवोरूपाः मिथ्याप्रपञ्चाः सर्जयति |

---

[17]श्रीमद्भगवद्गीता . (२०१६). Gorakhpur: Geeta Press, 'अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते | तस्मादेवं विदित्वैनं नानुसोचितुमर्हसि ||' (भ.गी.२.२५)

[18] श्रीवासुदेवानन्दसरस्वतीटेम्बेस्वामी. (१९५४). श्रीदत्तपुराणम् श्रीवासुदेवानन्दसरस्वतीतेम्बेस्वामीकृत सटीकम् (संस्कृतम्). पुणे: श्रीवामन दत्तात्रेय कुलकर्णी, नारायण पेठ, 'सृजतीव तदात्मैक: स्वैकांशादूर्णनाभिवत् | लीलाकैवल्यमस्येदं लोकवत्समदर्शिनः ||' (द.पु.१.३.१३)

[19] ब्रह्मसूत्र शाङ्करभाष्यम्. (2013). New Delhi: Motilal Banarassi Dass, Delhi, 'लोकवत्तु लीलाकैवल्यम्' (ब्र.सू.२.१.३३)

[20] मुण्डकोपनिषत्. (२०१७). Gorakhpur: Geeta Press, 'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति | यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वम् ||' (मु.उप.१.१.७), Swāmī Nikhilananda. (2014). *Vedāntasāra Sadānanda Yogīndra Praṇita*. New Delhi: Advaita Ashram, Uttarakhand 'यथा लूता तन्तुकार्यं प्रति स्वप्रधानतया निमित्तं स्वशरीरप्रधानतयोपादानञ्च भवति ||' (वे.सा.५६)

प्रत्यक्षानुभवेनैव आत्मा एकमेवाद्वितीयमिति ज्ञानमुत्पद्यते |[21] सद्गुरुकृपया एव अनुभवात्मकज्ञानोत्पत्तिः सम्भवति | इदमेव साक्षात्कारमिति बुधाः मन्यन्ते | ज्ञानोदये मिथ्याभ्रमविलीये केवलमात्मा अवशिष्यते |

इदं दृश्यमानं नामरूपात्मक जगदनादिमायवशाद्दर्पणे दृष्टप्रतिबिम्बवद्भासते किन्तु ज्ञानोत्तरे जीवः स्वमीश्वरेति अनुभवति |[22] ब्रह्मणः जगद्विलक्षणेननापि कथमिदं जगद्भासते इति सन्देहः विद्यते | अतः दर्पणदृष्टान्तः उदाहृतः | यथा दर्पणे दृश्यमान वस्तूनि दर्पणे सन्तीति अवगम्यते तथैव मायावशाद्दृश्यमाननामरूपात्मकमिदं जगत् सच्चिदानन्दपरमात्मनि भासते | अनादिमाययाकल्पितः जगतः स्वप्नवत् निवृत्तिर्भवितुमसम्भवम् | केवलं दैवयोगेन वा आप्तयोगेन वा सद्गुरोः अनुग्रहेणैव जगतः मिथ्याभ्रमस्य निवृत्तिर्भवति |[23,24]

सृष्टेः पूर्वं दृश्यमानप्रपञ्चमात्मेति मन्यमाने आत्मनः जगद्भावापत्तिरुत्पद्यते | तदा आत्मा विश्वस्य कथं कारणं भवति ? अस्य सन्देहनिवृत्तिः श्रुतिवाक्यप्रमाणैः मायाश्रित आत्मनः कार्यमेवेति कथितः |[25]

आत्मनि अध्यारोपापवादेन प्रपञ्चस्य अभावः सम्भवति | प्रपञ्चोपाशमे शान्तमद्वैते बन्धमोक्षस्यापि अभावः |[26] 'असर्पभूतायां रज्जौ सर्पारोपवद्वस्तूनि अवस्त्वारोपः-

---

[21] श्रीवासुदेवानन्दसरस्वतीटेम्बेस्वामी. (१९५४). श्रीदत्तपुराणम् श्रीवासुदेवानन्दसरस्वतीतेम्बेस्वामीकृत सटीकम् (संस्कृतम्). पुणे: श्रीवामन दत्तात्रेय कुलकर्णी, नारायण पेठ, 'तथात्मनोऽनादिमायावेशादेकस्य चाप्ययम् | मिथ्याभ्रम प्रबोधेऽयमेकः स्वात्मैव शिष्यते ||' (द.पु.१.३.१५)

[22] तत्रैव, 'भातीदं स्वान्तरादर्शदृश्यवन्मायया बहिः | स्वप्नवज्जातमिव तत्प्रबुद्धः स शिवोऽस्म्यहम् ||' (द.पु.१.३.१६)

[23] तत्रैव, 'एवं श्रद्धाभक्तियुक्तः संशयं यो विभावयेत् | देवसद्गुरुभक्तोऽस्य कुतोऽयं शिष्यते भ्रमः ||' (द.पु.१.३.१७), 'अनादिस्वप्नभ्रमोऽयं न स्वयं विनिवर्तते | किन्तु स्वदैवयोगाप्तपृदेवाचार्यप्रसादतः ||' (द.पु.१.३.१८)

[24] माण्डूक्योपनिषत्.गौडपादकारिका (२०१०). Gorakhpur: Geeta Press, 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते | अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा ||' (गौ.का.१.१६)

[25] बृहदारण्यकोपनिषत्. (२०१७). Gorakhpur: Geeta Press ,'इन्द्रो मायाभिः पुरूरूप ईयते' (बृ.उप.२.५.१९), श्वेताश्वतरोपनिषत्. (२०११). Gorakhpur: Geeta Press , 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' (श्वे.उप.४.१०)

[26] श्रीवासुदेवानन्दसरस्वतीटेम्बेस्वामी. (१९५४). श्रीदत्तपुराणम् श्रीवासुदेवानन्दसरस्वतीतेम्बेस्वामीकृत सटीकम् (संस्कृतम्). पुणे: श्रीवामन दत्तात्रेय कुलकर्णी, नारायण पेठ, 'प्रपञ्चस्तदभावोऽस्मिन्नध्यारोपापवादतः | प्रपञ्चोपशमे शान्ते शिवेऽद्वैते कथन्निवमौ ||' (द.पु.१.३.२६)

अध्यारोपः ||' (वे.सा.३२), 'वस्तु - सच्चिदानन्दमयं ब्रह्म, अज्ञानादिसकलजडसमूहोऽवस्तु ||'(वे.सा.३३), 'अपवादो नाम रज्जुविवर्तस्य सर्पस्य रज्जुमात्रवद्वस्तुविवर्तस्य अवस्तुनो अज्ञानादेः प्रपञ्चस्य वस्तुमात्रत्वम् ||' (वे.सा.१३७) तस्माद् भासमानमिदं जगद्विवर्तैव | बन्धमोक्षौ तथा च जीवसर्वेश्वरभिदावपि विवर्त एव |[27] ईदृशः ज्ञानेन जीवः जीवन्मुक्तो भविष्यति |[28] जीवन्मुक्तः जगति बालोन्मत्तपिशाचवत्सञ्चरति | यद्यपि प्रारब्धकर्मानाचरति किन्तु ताभ्यामलिप्तः भवति | स्वात्मानन्दे रमति |[29]

**तत्त्वम्पदलक्षणम्**

तच्छब्दलक्ष्यः ब्रह्माणं दर्शयति | इदं जगत्तु ब्रह्मणि ओतं प्रोतं च तदाश्रितम् |[30] कथमेकविज्ञानेन सर्वविज्ञानं ज्ञातं भवति इतिसन्देहः अस्ति चेत् 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' (ब्र.सू.१.४.२३) इति श्रुतिवचनेन प्रतिज्ञादृष्टान्तयोः अनुपरोधेनेदं प्रतिपादनं दृढीकृतः | तत्त्वमसि इति महावाक्ये तत्पदः ब्रह्माणं दर्शयति अतः तत् ब्रह्मवाचकशब्दः | तत् त्वं इति पदद्वयस्य अभेददर्शनार्थम् इदम् इति शब्देन समानाधिकरण्यं कथितः |[31] तथैव एकस्य ब्रह्मणः ज्ञानेन सर्व विदितं भवति तथा न

---

[27] तत्रैव, 'बन्धमोक्षौ तथा जीवसर्वेश्वरभिदावपि | कोशेपाधिपरित्यागान्न जीवो नापि चेश्वर ||' (द.पु.१.३.२७)

[28] तत्रैव, 'स्वस्वरूपे परिज्ञाते न बन्धो नापि मोक्षणम् | बन्धमोक्षप्रकारं ते वक्ष्ये सङ्क्षेपतः श्रृणु ||' (द.पु.१.३.२८), माण्डूक्योपनिषत्.गौडपादकारिका (२०१०). Gorakhpur: Geeta Press, 'न निरोधो न चोत्पात्तिर्न बद्धो न च साधकः | न मुमुक्षुर्न वा मुक्त इत्येषा परमार्थता ||' (गौ.का.२.३२)

[29] श्रीवासुदेवानन्दसरस्वतीटेम्बेस्वामी. (१९५४). श्रीदत्तपुराणम् श्रीवासुदेवानन्दसरस्वतीतेम्बेस्वामीकृत सटीकम् (संस्कृतम्). पुणे: श्रीवामन दत्तात्रेय कुलकर्णी, नारायण पेठ, 'दक्षोज्ञोऽप्यन्यदृष्ट्या तु बालोन्मत्तजडोपमः | तिष्ठत्येव स्वरूपे स दिवि भिन्नघटाभवत् ||' (द.पु.१.३.४०)

[30] श्रीवासुदेवानन्दसरस्वतीटेम्बेस्वामी. (१९५४). श्रीदत्तपुराणम् श्रीवासुदेवानन्दसरस्वतीतेम्बेस्वामीकृत सटीकम् (संस्कृतम्). पुणे: श्रीवामन दत्तात्रेय कुलकर्णी, नारायण पेठ, 'तच्छब्दलक्ष्येऽस्मिन्नोतं प्रोतं चैतत्तदाश्रयम् | यस्मिञ्ज्ञाते सर्वमिदं विज्ञातं भवति ध्रुवम् ||' (द.पु.१.६.३२), छान्दोग्योपनिषत्. (२०१७). Gorakhpur: Geeta Press, 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातँस्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् |' (छा.उप.६.१.४)

[31] Swāmī Nikhilananda. (2014). Vedāntasāra Sadānanda Yogīndra Praṇita. New Delhi: Advaita Ashram, Uttarakhand, 'समानाधिकरण्यसम्बन्धः तावत् यथा सोऽयं देवदत्त इत्यस्मिन्वाक्ये तत्कालविशिष्टदेवदत्तवाचक स शब्दस्यैतत्कालविषिष्टदेवदत्तवचक अयं शब्दस्य च एकस्मिन्पिण्डे तात्पर्यसम्बन्धः | तथा चस तत्त्वमसि वाक्येऽपि परोक्षत्वादि विशिष्टचैतन्य वाचक तत्पदस्य अपरोक्षत्वादि विशिष्टचैतन्यवाचक त्वम्पदस्य च एकस्मिन्चैतन्ये तात्पर्यसंबन्धः |' (वे.सा.१५१)

अन्यज्ञानस्य वेद्यमिति।

जीवब्रह्मैक्यसिद्धेः अभिन्ननिमित्तोपादानत्वमर्थात् प्रकृत्यधिष्टातयोः ऐक्यं वर्णयति। यतः अत्र निमित्तोपादानकारणयोरभिन्नत्वं प्रतिपादितः।[32,33] परब्रह्म अन्तर्यामी मायावी आत्मा तच्छब्दवाचकः। स कामादिकैर्दूषितः अस्मप्रत्ययस्य अधिष्ठानः।[34]

आकाशवत्सर्वव्यापी अद्वितीयः मायावरणशून्यः सद्रूपः[35] प्राणादिकलासहितः[36] शान्तः प्रत्यादिप्रमाणैः अप्रेमयः जन्मादिविकारहितः कल्याणमयः इति स परब्रह्माणं वर्णयति। अतः प्रत्यक्परोक्षादिकानां विरोधं त्यक्त्वा तत्त्वम्पदार्थयोरखण्डैक्यज्ञानेन शुद्धचिदात्मनस्यानुभवं सिद्ध्यते।[37] येन बुद्धिवृत्तिव्याप्तफलनिवारणेन चित्तैकाग्रं साधयति श्रवणमनननिदिध्यासनैः स्वात्मानं जानाति स मुक्तोभूत्वा कृतकृत्यो भवति।

---

[32] श्रीवासुदेवानन्दसरस्वतीटेम्बेस्वामी. (१९५४). श्रीदत्तपुराणम् श्रीवासुदेवानन्दसरस्वतीतेम्बेस्वामीकृत सटीकम् (संस्कृतम्). पुणे: श्रीवामन दत्तात्रेय कुलकर्णी, नारायण पेठ, 'अस्याभिन्ननिमित्तोपादानत्वं चैक्यसिद्धये। प्रकृत्यधिष्ठात्रैक्यं च प्रतिज्ञातमनेन हि॥' (द.पु.१.६.३३)

[33] तैत्तिरीयोपनिषत्. (२०१७). Gorakhpur: Geeta Press, 'इदं सर्वमसृजत्' (तै.उप.२.६.१), 'तदात्मानं स्वयमकुरुत' (तै.उप.२.७.१) तत्सृष्टया तदेवानुप्राविशत' (तै.उप.२.६.१)

[34] श्रीवासुदेवानन्दसरस्वतीटेम्बेस्वामी. (१९५४). श्रीदत्तपुराणम् श्रीवासुदेवानन्दसरस्वतीतेम्बेस्वामीकृत सटीकम् (संस्कृतम्). पुणे: श्रीवामन दत्तात्रेय कुलकर्णी, नारायण पेठ, 'अन्तर्यामी च मायावी स तु तच्छब्द वाचकः। योऽस्मतप्रत्ययशब्दाभ्यालम्बः कामादिदूषकः॥' (द.पु.१.६.३७)

[35] तत्रैव, 'तद्वयोमवत्सर्वगतमद्वितीयं निरञ्जनम्। सन्मात्रं निष्कलं शान्तमप्रमेयमजं शिवम्॥' (द.पु.१.६.३८)

[36] प्रश्नोपनिषत्. (२०१७). Gorakhpur: Geeta Press, 'स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु च नाम च।' (प्र.उप.६.४), 'इहैवान्तःशरीरे सोम्य स पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्तीति। (प्र.उप.६.२)

[37] श्रीवासुदेवानन्दसरस्वतीटेम्बेस्वामी. (१९५४). श्रीदत्तपुराणम् श्रीवासुदेवानन्दसरस्वतीतेम्बेस्वामीकृत सटीकम् (संस्कृतम्). पुणे: श्रीवामन दत्तात्रेय कुलकर्णी, नारायण पेठ, 'प्रत्यक्परोक्षादिवैरं तयोर्हित्वा चिदात्मताम्। गृहीत्वा लक्षितां शुद्धां भूमैक्यज्ञानतो भवेत्॥' (द.पु.१.६.४१)

अतः हे सौम्य त्वमपि आत्मज्ञानसाक्षात्कारेण शोकमुक्तो भविष्यतीति अथर्व ऋषिः शाण्डिल्यमाशासीत| अत्र श्रुतिवचनैः चित्तैकाग्रसाधनं सूचयति|[38,39]

## अथाष्टाङ्गयोगज्ञानम्

शोकं त्यक्त्वा श्रद्धया शृणु इति अथर्वयति शाण्डिल्यं कथयन् तथा च येन मनःप्रसादं सिध्यति तत्पातञ्जलाष्टाङ्गयोगं बोधयति | जीवब्रह्मैक्यं ज्ञातुं पातञ्जलाष्टाङ्गयोगस्य अष्टान्यङ्गानि भवन्ति | देहेन्द्रयादीनां मिथ्यात्वज्ञानेन वैराग्यमुत्पद्यते तद् यमः|[40] ब्रह्मणः सत्यत्वं निर्धारित्य स्वात्म्याविषये तात्त्विकप्रेमैव नियमः| शब्दादिविषयेषु औदासीन्यमुत्पादयन् अन्तर्दृष्टिस्थापनेनैव स्थिरासनम्|[41]

प्राणायामः इति चतुर्थः अङ्गम्| तस्य त्रीणि प्रकाराणि सन्ति| चैतन्ययान्वयं साधयन् आत्मतत्त्वस्य ग्रहणमेव पूरकः | ईदृक् गृहीतात्मतत्त्वस्य स्थिरीकरणं कुम्भकम्| तथा मिथ्यात्मकनामरूपस्य वर्जनमेव रेचकः| इति त्रिविध प्राणायामः|[42]

---

38 तैत्तिरीयोपनिषत्. (२०१७). Gorakhpur: Geeta Press, 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सः|' (तै.उप.२.४.१) बृहदारण्यकोपनिषत्. (२०१७). Gorakhpur: Geeta Press, 'मनसौवनुदृष्टव्यम्' (बृ.उप.४.४.१९), कठोपनिषत्. (२०१७). Gorakhpur: Geeta Press, 'एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते | दृश्यते त्वग्र्यया बुध्दया सूक्ष्मया सूक्ष्मदर्शिभिः|' (क.उप.१.३.१२),

39 श्रीवासुदेवानन्दसरस्वतीटेम्बेस्वामी. (१९५४). श्रीदत्तपुराणम् श्रीवासुदेवानन्दसरस्वतीतेम्बेस्वामीकृत सटीकम् (संस्कृतम्). पुणे: श्रीवामन दत्तात्रेय कुलकर्णी, नारायण पेठ, 'वाग्धीनिवृत्यानाप्त्या च फलव्याप्तिर्निवारिता | एवमात्मस्थमात्मानं योगेन श्रवणादिना ||' (द.पु.१.६.४२), 'जानात्यैक्यं स मुक्तः सन्कृतकृत्यो भवेद्ध्रुम् || आत्मविज्ञानेन सोम्य शोकस्यान्तं गमिष्यसि ||' (द.पु.१.६.४३)

40 तत्रैव, 'योगः स्यात्प्रत्यगात्मैक्यमष्टावङ्गनि तस्य तु| देहेन्द्रियादौ विरक्तिर्यमो मिथ्यात्ववीक्षणात्||' (द.पु.१.६.४५)

41 तत्रैव, 'स्वात्मतत्वेऽनुरक्तिर्नियमः सत्यत्वनिश्चयात्| बाह्यार्थोदासीन्यतोन्तर्दृष्टिस्थापनमासनम्||' (द.पु.१.६.४६)

42 श्रीवासुदेवानन्दसरस्वतीटेम्बेस्वामी. (१९५४). श्रीदत्तपुराणम् श्रीवासुदेवानन्दसरस्वतीतेम्बेस्वामीकृत सटीकम् (संस्कृतम्). पुणे: श्रीवामन दत्तात्रेय कुलकर्णी, नारायण पेठ, 'पूरश्चिदन्वयादानं कुम्भकस्तस्थिरीकृतिः | रेचको मायिकत्यागः प्राणायामस्त्रिधोदितः||' (द.पु.१.६.४७)

इन्द्रियविषयग्रहणानासक्तिः एव प्रत्याहारः । असम्भवादि दुर्भावनानां नाशयन् स्वात्मनि दृढनिष्ठासाधनमेव धारणा ।[43] मायामयविकाराणां त्यक्त्वा 'अहं ब्रह्मास्मीति अन्तर्दृष्टेः प्रवाहसातत्यमेव ध्यानम् ।[44] देहात्मवत् परमात्मनि सुस्थिरीकृतदृष्टिरेव समाधीः ।[45] इति पातञ्जलयोगस्याष्टवङ्गानि भवन्ति ।

इदं पातञ्जलयोगं परिपक्वकषायाणामर्थाद्रागादिदोषरहितानां तथा किञ्चित्पक्वकषायाणामपि अर्थात्किञ्चिदपि रागदोषादिवर्जितानामपि शीघ्रमुक्तिदः भवति ।[46]

---

[43] तत्रव, 'प्रत्याहारो गोस्वभावदृष्ट्यार्थासक्त्यभावदृक् । धारणा स्वात्मनिष्ठा स्याहीतदुर्भावनं दृढा ॥' (द.पु.१.६.४८), शाण्डिल्योपनिषत्. (n.d.). Retrieved from Sanskritdocuments.org: www.sanskritdocuments.org/upanishads, 'अथ प्रत्याहारः । स पञ्चविधः विषयेषु विचरतामिन्द्रियाणां बलादाहरणं प्रत्याहरः । यद्यत्पश्यति तत्सर्वमामेति प्रत्याहारः । नित्यविहितकर्मफलत्यागः प्रत्याहारः । सर्वविषयपराङ्मुखत्वं प्रत्याहारः ।' (शा.उप.८), शाण्डिल्योपनिषत्. (n.d.). Retrieved from Sanskritdocuments.org: www.sanskritdocuments.org/upanishads, 'अथ धारणा । सा त्रिविधा । आत्मनि मनोधारणं दहराकाशे बाह्याकाशधारणं पृथिव्यप्तेजोवाय्वाकाशेषु पञ्चमूर्तिधारणं चेति ॥' (शा.उप.९)

[44] श्रीवासुदेवानन्दसरस्वतीटेम्बेस्वामी. (१९५४). श्रीदत्तपुराणम् श्रीवासुदेवानन्दसरस्वतीतेम्बेस्वामीकृत सटीकम् (संस्कृतम्). पुणे: श्रीवामन दत्तात्रेय कुलकर्णी, नारायण पेठ, 'ध्यानं ब्रह्माहमस्मीति दृक्प्रवाहोऽन्यवर्जनात् । देहात्मवत्परात्मत्वदृक् समाधिर्हि सुस्थिरा ॥' (द.पु.१.६.४९), शाण्डिल्योपनिषत्. (n.d.). Retrieved from Sanskritdocuments.org: www.sanskritdocuments.org/upanishads, 'अथ ध्यानम् । तद्द्विविधं सगुणं निर्गुणं चेति । सगुणं मूर्तिध्यानम् । निर्गुणमात्मयाथात्म्यम् ॥' (शा.उप.१०)

[45] शाण्डिल्योपनिषत्. (n.d.). Retrieved from Sanskritdocuments.org: ww.sanskritdocuments.org/upanishads, 'अथ समाधिः । जीवात्मपरमात्मैक्यावस्थात्रिपुटीरहिता परमानन्दस्वरूपा शुद्धचैतन्यात्मिका भवति ॥' (शा.उप.११)

[46] श्रीवासुदेवानन्दसरस्वतीटेम्बेस्वामी. (१९५४). श्रीदत्तपुराणम् श्रीवासुदेवानन्दसरस्वतीतेम्बेस्वामीकृत सटीकम् (संस्कृतम्). पुणे: श्रीवामन दत्तात्रेय कुलकर्णी, नारायण पेठ, 'परिपक्वकषायाणां योगोऽयं शीघ्रमुक्तिदः । किञ्चित्पक्वकषायाणां योगोऽयं शीघ्रमुक्तिदः ॥' (द.पु.१.६.५०)

**उपसंहारः**

यथा समुद्रे स्थित मकरवद्रागलोभमोहाकृष्टः जीवः नानामर्त्ययोनौ सञ्चरन् त्रस्थः दैवयोगेन उत्तम ब्राह्मण जन्मः सम्प्राप्यति | उत्तमजन्मप्राप्त्यानान्तरं कथं किमाचरणेन जीवन्मुक्तः भवतीति सन्देहे इदं विद्यते |

दैवयोगेन उत्तमजन्मप्राप्तजीवः वर्णाश्रमधर्मानुसारेण अध्ययनाध्यापन यजन याजन दान प्रतिग्रह इति वेदविहित नित्यनैमित्तिककर्मानुष्ठानेन ईश्वरार्पणबुद्ध्या चित्तशुद्धीकारयेत् | ऐहिकामुष्मिकफलापेक्षारहितः वैराग्येण जीवब्रह्मात्मैक्यज्ञानं प्राप्तुं सद्गुरुं शरणं व्रजेत् | सद्गुरूपदीष्ट महावाक्यश्रवणमनननिदिध्यासनैः ज्ञानप्रतिबन्धक त्रिविधतापाः अर्थादध्यात्मिकाधिदैविकाधिभौतिकेभ्यो विमुक्तो भवति | ईदृक् मुमुक्षुः जीवन्मुक्तो भवति |

विनाज्ञानं मोक्षप्राप्तिरसम्भवम् | विना सद्गुरोरनुग्रहेण ज्ञानप्राप्तिरसम्भवम् | ईश्वरकृपाप्रसादं विना सद्गुरुप्राप्तिः न भवति | परमेश्वरानुग्रहार्थं चित्तशुद्धिः प्राप्तुं नित्यनैमित्तिका वेदविहित स्वधर्मानुष्ठानमाचरेयुः |

## सन्दर्भसूची |

Swāmī Mādhavānaṅda. (2010). Minor Upanishads. New Delhi: Advaita Ashram, Uttarakhand.

Swāmī Nikhilānaṅda. (2010). ***दक्षिणामूर्तिस्तोत्रम्.*** New Delhi: Advaita Ashram, Uttarakhand.

Swāmī Nikhilanaṅda. (2014). Vedāṅtasāra Sadānaṅda Yogīndra Praṇīta. New Delhi: Advaita Ashram, Uttarakhand.

***अरविन्दोपनिषत्.*** (n.d.). Retrieved from sanskritdocuments.org: https://sanskritdocuments.org/doc_upanishat/aravindopanishad.html

***कठोपनिषत्.*** (२०१७). Gorakhpur: Geeta Press.

***छान्दोग्योपनिषत्.*** (२०१७). Gorakhpur: Geeta Press.

***तैत्तिरीयोपनिषत्.*** (२०१७). Gorakhpur: Geeta Press.

***प्रश्नोपनिषत्.*** (२०१७). Gorakhpur: Geeta Press.

***बृहदारण्यकोपनिषत्.*** (२०१७). Gorakhpur: Geeta Press.

***ब्रह्मसूत्र शाङ्करभाष्यम्.*** (2013). New Delhi: Motilal Banarassi Dass, Delhi.

***माण्डूक्योपनिषत्.गौडपादकारिका.*** (२०१०). Gorakhpur: Geeta Press.

***मुण्डकोपनिषत्.*** (२०१७). Gorakhpur: Geeta Press.

***वेदान्त दर्शन.*** (२०१६). Gorakhpur: Geeta Press.

***शाण्डिल्योपनिषत्.*** (n.d.). Retrieved from Sanskritdocuments.org: https://sanskritdocuments.org/doc_upanishat/shandilyopanishad.htmlश्रीमद्भगवद्गीता . (२०१६). Gorakhpur: Geeta Press.

**श्रीवासुदेवानन्दसरस्वतीटेम्बेस्वामी.** (१९५४). ***श्रीदत्तपुराणम् श्रीवासुदेवानन्दसरस्वतीटेम्बेस्वामीकृत सटीकम् (संस्कृतम्).*** **पुणे: श्रीवामन दत्तात्रेय कुलकर्णी, नारायण पेठ.**

***श्वेताश्वतरोपनिषद्.*** (२०११). Gorakhpur: Geeta Press.

# पाणिनीयनये अपादानतत्त्वविमर्शः

डॉ. अभिमन्युः

संस्कृतव्याकरणे वाक्यस्य अर्थावबोधकत्वानामनुसन्धानक्रमे कारकप्रकरणे विचारः कृतः अस्ति । वाक्ये कर्तृक्रिययोः सम्बन्धावधारकत्त्वं कारकत्वेन निरूपितं तत्र । वस्तुतः क्रियानिष्पत्तेः साधिका शक्तिर्हि क्वचित् साधनत्वेनोक्ता कारकमिति व्यपदिश्यते-

स्वाश्रये समवेतानां तद्वदेवाश्रयान्तरे। क्रियाणामभिनिष्पत्तौ सामर्थ्यं साधनं विदुः[1]॥

वाक्ये क्रियैव कारकनिर्णयस्य आधारः भवति । तस्याः क्रियायाःव्यापाराश्रयःस्वातन्त्र्येणान्वितः कर्ता उच्यते । फलाश्रयश्च कर्म भवति । क्रियायाः सिद्धये यत् साधकतमं भवति तत् करणम् आधारश्चाधिकरणम् । कारकता एव कारकत्वस्य निर्धारिका भवति । अत एव कर्ता, कर्म, अधिकरणम्, करणम्, सम्प्रदानम्, अपादानम् इति प्रतिपादनस्य क्रमे आद्याश्चत्वारः क्रियार्थकात् 'कृ' धातोर्निष्पद्यन्ते । तत्र क्रियायाः प्रथमादारभ्य अधिकतरं कारकत्वं दृश्यते । शिष्टयोस्तु व्युत्पत्तिः कृधातोर्नास्ति अतस्तत्र च न्यूनं कारकत्वम् । आष्टाध्याय्यां विप्रतिषेधे परं कार्यम् इति सूत्रानुसारं 'गरीयो यद् यदुत्तरम्' इति न्यायेन कारकाणां स्थापना कृता अस्ति । अर्थात् आदावपादनम् ततः क्रमशः सम्प्रदानम्, करणम्, अधिकरणम्, कर्म, कर्ता चेति । प्रकृतस्थले अपानकारके एव संक्षेपेण विमर्शः क्रियते ।

पाणिनि: ध्रुवमपायेऽपादानमि' ति[2] अपादानकारकं लक्षयति। केषाञ्चन अवशिष्टप्रयोगाणां साधनाय इतराण्यपि सप्तसूत्राणि प्रणिनाय। 'भीत्रार्थानां भयहेतु:', 'पराजेरसोढ:', 'वारणार्थानामीप्सित:', 'अन्तर्धौ येनादर्शनमिच्छति', 'आख्यातोपयोगे', 'जनिकर्तु: प्रकृति:', 'भुव: प्रभव:', इति एतदनुसारमेवास्ति ।[3]

कात्यायनोऽपि वार्तिकेनैकेन पाणिनीयं विवरणं समर्थयति- 'जुगुप्साविरामप्रमादार्थानाम् उपसंख्यानम्' इति।[4]

---

[1] वा. प. साधनसमुद्देशः, ३६

[2] पा.सू.१/४/२४

[3] पा.सू.१/४/२५-३१

[4] महाभाष्यम्, पृ.२४८.

पतञ्जलि: पाणिनीयलक्षणोक्तध्रौव्यं विमर्शयति।[5] तदनुसारं ध्रौव्येण न केवलं स्थिरवस्तूनाम् अपितु गतिशीलानामपि ग्रहणं भवति यथा धावतोऽश्वात् पतति'। भाष्यकार: तर्कपूर्वकम् इदम् अपादानस्य उदाहरणं प्रतिपादयति। यतो अश्वगतम् अश्वत्वं स्थिरमेव अस्ति अश्वत्वरूपसामान्यं च ध्रुवं सत् अपादानं भवेदिति। अन्यैरपि उदाहरणै: असौ स्वमतं पोषयति- 'अश्वात् त्रस्तात् पतित:', रथात् प्रवीतात् पतित:','सार्थाद् गच्छतो हीन:' इत्यादिषु अपि सामान्ये एवम् अपादानत्वमिति। तत्र अश्वे अश्वत्वम्, आशुगामित्वं वा सामान्यम्, रथे तोष्टृत्वम्, सार्थेऽपि सार्थत्वम्।[6] एवमेव ध्रौव्ये योग: इति।[7]

अपायेनापि द्विविध: पृथग्भाव: स्वीक्रियते भाष्यकृता-वास्तव: मानसञ्चेति। अनेन च 'भीत्रार्थानां भयहेतु:', 'पराजेरसोढ:', 'वारणार्थानामीप्सित:' इत्यादीनाम् उदाहरणेषु मानसापायस्य उपस्थिते: ध्रुवमपाये इत्यादिसूत्रेणैव अपादानं प्रतिपद्यते अत: उक्तसूत्राणि व्यर्थानि सन्ति इति रूपेण स्वीकृति:। यथा 'भीत्रार्थानां भयहेतु: इत्यस्योदाहरणे 'वृकेभ्यो बिभेति' 'चौरेभ्यस्त्रायते' अत्र मानसोऽपाय: उच्यते वृकेभ्य: चोरेभ्यश्च कर्तु:। अपादानत्वञ्च मुख्यसूत्रेणैव उक्तं स्यात् अत: नात्र पृथक् सूत्रमावश्यकमिति।[8]

'पराजेरसोढ:' इत्यस्यापि वैय्यर्थ्यं प्रादर्शयत् भाष्यकार:। 'अध्ययनात् पराजयते' अत्र वाक्ये अध्ययनात् मानसावायात् कर्तु: नेदमपि सूत्रमावश्यकमिति।[9] तथैव 'अन्तर्धौ येनादर्शनमिच्छति' अस्योदाहरणे 'उपाध्यायादन्तर्धत्ते इति वाक्ये कर्तु: उपाध्यायात् मानसोऽपाय: विवक्ष्यते। अत एव मुख्यसूत्रैव अपादानसंज्ञाऽऽपद्येत न पुन: पृथक् सूत्रं कर्तुमावश्यकम्। 'वारणार्थानामीप्सित:' अत्र च प्रयोगे 'माषेभ्यो गां वारयति' इति वाक्ये। माषेभ्य: गो: अपाय: कर्तु: मनसि बिम्बित: भवति। अत: मुख्यसूत्रोक्तं लक्षणमत्र प्रवर्तते न पृथग्लक्षणपेक्ष्यते।[10] आख्यातोपयोगे' इत्यत्रापि उपाध्यायात् वस्तुत:[11] निर्गत्य ज्ञानं अध्येतरि अस्याशय: उक्त: भवति न कर्तुमावश्यकं पृथक् सूत्रयितुमिति।[12]

---

[5] इदं तर्हि वृक्षस्य पर्णं पतति, कुड्यस्य पिण्डं पतति, महाभाष्यम्, पृ.२४७.

[6] इह तावत् अश्वात् त्रस्तात् पतति इति यत् तद् अश्वस्य अश्वत्वम्.........तद् ध्रुवं विवक्षितम्। तत्रैव, पृ.२४९.

[7] तत्रैव, पृ.२४९.

[8] तत्रैव, पृ.२५०

[9] तत्रैव, पृ.२५०-२५१.

[10] तत्रैव, पृ.२५१-२५२

[11] तत्रैव, पृ.२५२-२५३

[12] कथम्? उपाध्यायात् अधीयते इति, उपक्रमति तस्माद् अध्ययनम्.........सन्ततत्वात् अथवा ज्योतिर्विज्ञानानि भवन्ति, तत्रैव, पृ.२५४

'जनिकर्तु: प्रकृति:', 'भुव: प्रभव:' इत्यनयो: उदाहरणे 'गोमयाद् वृश्चिको जायते', 'गोलोमाविलोमभ्यो दूर्वा जायते' 'हिमवतो गंगा प्रभवति' इत्यादिषु वास्तविकोऽपाय: लक्ष्यते अत: नात्र आवश्यकं सूत्रयितुमिति। यत्र च कार्यकारणयो: अपाय: न शक्य: यथा-'दुग्धात् दधि भवति' तेषां प्रयोगाणां साधुत्वाय पृथग्लक्षणमसौ करोति- 'अथवान्याश्चान्याश्च प्रादुर्भवति'[13] एतदनुसारम्। ईदृश: कार्यकारणयो: पृथग्भाव: बौद्धानां क्षणिकवादस्य, सांख्यानां सत्कार्यवादस्य, वैशेषिकाणाञ्च आरम्भवादस्य सन्दर्भेऽपि विवेचित: भवति।

हिमवत: गंगा सातत्येन प्रवहति अत: तस्या: पृथग्भाव: नास्ति इत्यपि एकेषां मतं विवृण्वान: भाष्यकार: जलानां प्रतिक्षणम् अपायं गत्वा इदम् अपादानस्य स्फुटमुदाहरणं प्रतिपादयति।[14] न कश्चिदपि समानां नदीं द्विधा प्रविशतीति पाश्चात्य (ग्रीक) विदुष: मतमपि पतञ्जले: सिद्धान्तं समर्थयति।

जुगुप्साविरामप्रमादार्थानाम् उपसंख्यानम्' इति कात्यायनस्य वार्तिकमपि भाष्यकार: अनावश्यकं प्रतिपादयति। 'धर्माद् विरमति' 'अधर्मात् प्रमाद्यति' इत्यादिषु धर्माधर्मयो: कर्तु: मानसिकापायात्। मुख्येन अपादानसूत्रेणैव अपादानमुक्तं भवति।[15] तथैव हि 'संकाश्यकेभ्य: पाटलिपुत्रका: अभिरूपतरा:' ईदृशतुलनात्मकवाक्येषु अपि तुलिताभ्याम् अन्यतरात् अन्यस्य अपाय: उच्यते वक्तुर्मनसि। अत एव पञ्चमीविभक्ते: इत्यपि सूत्रं नावश्यकम्।[16] नैय्यायिकानाम्, बौद्धानां च क्षणिकवादिनां परोक्षसन्दर्भेण भाष्यकार: 'आसनात् प्रेक्षति' इत्यत्रापि चक्षुरिन्द्रिये आसने च अपायस्य बोधात् अयमपि प्रयोग: मुख्योऽपादानप्रसङ्ग नात्र 'पञ्चमीविधाने ल्यब्लोपे कर्मण्युपसंख्यानम्' वार्तिकमावश्यकमिति।[17]

कैय्यट: पाणिनीये अपादानलक्षणे सयुक्तिकं व्याख्यानं प्रस्तौति। तस्यानुसारं 'ध्रुवमपायेऽपादानम्' अस्य 'यत्तदश्वे अश्वत्वम् आशुगामित्वं तद्ध्रुवं तच्च विवक्षितम्' इत्यभिप्राय:।[18] 'आख्यातोपयोगे' अस्य च 'ज्ञातृत्वाज्ज्ञानानि भवन्ति इतिवत्।[19] 'जनिकर्तु:

---

[13] तत्रैव, पृ.२५५

[14] उपक्रमन्ति.....अथवान्यश्चान्यस्य प्रादुर्भवन्ति, तत्रैव, पृ.२५५

[15] तत्रैव, पृ.२४८

[16] इह च संकाश्यकेभ्य:........एतत् प्रयुंक्ते, तत्रैव, पृ.२४८

[17] अपादानम् इत्येव सिद्धम्.......अन्यश्चान्यस्य प्रादुर्भवन्ति, तत्रैव, पृ.५०५, २/३/२८ पा.सूत्रे

[18] अयमर्थ; व्युत्पत्तिमात्रम्.......अश्वत्वमेवोच्यन्ते। तत्रैव, पृ.२४९

[19] शब्दस्य व्यञ्जका.....सन्ततान्युच्यन्ते। तत्रैव, पृ.२४९

प्रकृति:' अस्यापि अथवा 'अन्यश्चान्यस्य प्रादुर्भवन्ति' इत्येवम् अभिप्राय: भवति।[20] ध्रुवशब्दे कैय्यटस्य विवरणम् भर्तृहरे: समानम् अस्ति किन्तु प्राय: पतञ्जलेरनभिप्रैतम्।[21]

भर्तृहरिणा वाक्यपदीये प्रतिपादितान् एव कैय्यटोऽपि स्वीकरोति।[22] 'वारणार्थानामीप्सित' इत्यत्र असौ ईप्सितशब्दस्य व्युत्पत्तिभिन्नमर्थं स्वीकरोति पतञ्जले: सन्दर्भेण।[23] भर्तृहरि: 'ध्रुवमपायेऽपादानमि'त्यत्र पतञ्जलिना स्वीकृतमिव स्थिरे चले च उभयत्र ध्रौव्यं स्वीकरोति। ध्रुवञ्च अपाये वियोगजनकव्यापारस्याश्रय: भवति।[24] असौ च ध्रुवस्य अर्थे अवधिसंज्ञामपि पृथक् प्रतिपादयति। ध्रुवं भूयोऽपि स्पष्टीकुर्वन् भर्तृहरि: धावन्तं तिष्ठन्तञ्च अश्वमवधित्वेन निरूपयति। यदा आरोही अश्वात् पतति चेत् अश्व: धावन् तिष्ठन् वाऽपि सन् ध्रुव: भवति किन्तु अश्वारोहिणौ अभावपि यदा कुड्या: पतत: चेत्तु कुडी ध्रुवा। द्वयो: वस्तुनो: मिथ: सापेक्ष्यं ध्रौव्यं भवति।[25] तत्र प्रसङ्गे वक्तुर्विवक्षैव ध्रौवस्य निर्धारकतत्वं भवति।[26] भर्तृहरि: अपायेऽपि द्वैविध्यं पतञ्जलिसम्मतं स्वीकरोति। तद्धि वास्तविकं मानसञ्च। अनेनासौ मानसापायसम्बन्धीनि 'भीत्रार्थानां भयहेतु:', 'पराजेरसोढ:', 'पञ्चमी विभक्ते'रित्यादीनि सूत्राणि व्याचष्टे।[27]

पतञ्जलेरुदाहरणेषु 'बलाहको विद्योतते', 'बलाहके विद्योतते', 'बलाहकाद् विद्योतते' इत्यादिषु विभक्तीनामर्थभेदं स्पष्टतया विवृणोति भर्तृहरि:।[28] तथाहि 'साधकतमं करणमि'त्यत्र 'धनुषा विध्यति' 'धनुर्विध्यति' इति उदाहरणयो: धनुषि स्थितं शक्तिद्वयं क्रमश: उक्तं भवति। इति भर्तृहरे: स्थापना।[29] अपादानमसौ निर्दिष्टविषयम्', उपात्तविषयम्', अपेक्षितक्रियञ्चे'ति त्रिधा विभनक्ति।[30]

हेलाराज: ध्रुवमपायेऽपादानमित्यत्र ध्रौव्यमधिकृत्य भर्तृहरे: व्याख्यानं सोदाहरणं

---

[20] क्षणिकपक्षं द्रव्यान्तरारम्भापेक्षं वा परिणामापेक्षं वा आश्रित्यैतदुक्तम्.........कारकरूपोपगमात्। तत्रैव, पृ.२५५

[21] ततो अपाये यद् अनाविष्टं तद् अपाये ध्रुवमुच्यते, तत्रैव, पृ.२४०

[22] तत्रैव, पृ.२४८

[23] ईप्सितशब्द: क्रियाशब्दमाश्रीयते न तु रूढिशब्द:, तत्रैव, पृ.२५१

[24] अपाये यद् उदासीनं चलं वा यदि वा चलम्। एवातदावेशात् तदपादानमुच्यते॥ वाक्यपदीयम्, सा.१४०

[25] पततो ध्रुव एवाश्वो........अवधित्वं पृथक् पृथक्, तत्रैव, सा. १४१

[26] तत्रैव. सा. १३९

[27] तत्रैव सा. १४७

[28] तत्रैव सा. १४६

[29] तत्रैव सा. १४५

[30] तत्रैव सा.१३६

विशदयति।[31] अपादानभेदानपि स: उदाहरणै: स्पष्टीकरणं करोति। यथा- 'ग्रामाद् आगच्छति' इदं निर्दिष्टविषयमपादानम्। 'बलाहकात् विद्योतते' इदं च उपात्तविषयमपादानम्। 'मथुरा: पाटलिपुत्रकेभ्य आढ्यतरा:' अत्र अपायप्रतिपादिकाया: क्रियाया: अभावो लक्ष्यते अत: अपेक्षितक्रियमपादानमिदम्।[32] 'निर्धारणे विभक्ते: य:' इति कारिकाव्याख्याने हेलाराज: अपेक्षितक्रियमपादानं[33] मानसमपादानञ्च सयुक्तिकं स्पष्टयति।[34]

वृत्तिकार: अपादानकारकविवरणे भाष्यप्रत्याख्याने सर्वाणि अपि अपादाने पाणिनीयसूत्राणि आवश्यकानि स्वीकरोति उदाहरणै: स्पष्टयत्यपि।[35] 'जनिकर्तु: प्रकृति'रित्यत्र प्रकृतिं हेतुत्वेन निर्दिशत्यसौ।[36] पतञ्जलिस्तु प्रकृतिमुपादानकारणं प्रतिपादयति।[37]

जिनेन्द्रबुद्धि: अपादानकारके पतञ्जले: व्याख्यानं स्वीकरोति किन्तु तत्र पाणिने: सर्वाण्यपि सूत्राणि आवश्यकानि मनुते। तदनुसारम् आचार्य इमानि सूत्राणि उक्त्वा अपादानस्य सर्वसंभवां कल्पनां निरूपयतीति। 'अन्तर्धौ येनादर्शनमिच्छती'त्यत्र असौ सप्तम्या: अर्थं निमित्तं विवृणोति।[38] तथैव 'जनिकर्तु: प्रकृति'इत्यत्र प्रकृतिपदेन उपादाननिमित्तोभयकारणयो: ग्रहणं स्वीकरोति। यथा 'पुत्रात् प्रमोदो जायते' इत्यत्र पुत्र: निमित्तकारणमस्ति।[39]

हरदत्त: जिनेन्द्रबुद्धे: प्रतिपादनानि स्वीकुर्वाणोऽपि[40] 'अन्तर्धौ येनादर्शनमिच्छती'त्यत्र सप्तम्या: अर्थं निमित्तं न मनुते अपितु विषयसप्तमीं सति सप्तमीं वा स्वीकरोति।[41]

पुरुषोत्तम: अपादानकारके पाणिनीयलक्षणानि यथावत् स्वीकरोति।[42] भर्तृहरे:

---

[31] तत्रैव, पृ.३४०-३४१

[32] तत्रैव, पृ.३३६

[33] तत्रैव, पृ.३४५

[34] तत्रैव, पृ.३४५

[35] काशिका, पृ.५३५-५४५

[36] तत्रैव, वृ.५४४

[37] तस्मात् पूर्वस्यायं प्रपञ्च: एवम् एवम् उत्तरेऽपि योग: पूर्वस्यैव वेदितव्य:। तत्रैव, १/४/२५ पा.सूत्रे, पृ.५३९

[38] अन्तर्धाविति निमित्तसप्तम्या, तत्रैव, पृ.५४१

[39] अथ प्रकृतिग्रहणं किमर्थम्...........प्रकृतिग्रहणे तु सति सर्वस्यैव कारणमात्रस्य भवति, तत्रैव, पृ.५४४

[40] पूर्वस्यां प्रपञ्च:,,,,,,तत्रैव, १/४/२५ सूत्रे, पृ.५३८, अयमपि प्रपञ्चो....सिद्धम्, तत्रैव, १/४/२७ सूत्रे, पृ.५४०, अयमपि प्रपञ्च:, तत्रैव, १/४/२८ सूत्रे, पृ.५४२

[41] नायं निमित्तात् कर्मयोगे इति सप्तमी.......विषयसप्तम्येषा, सति सप्तमी वा, तत्रैव, पृ.५४१

[42] भाषावृत्ति, पृ.४२

अनुकरणेन चास्य त्रैविध्यमपि विवृणोति-निर्दिष्टविषयम्, उपात्तविषयम्, अपेक्षितक्रियञ्च।[43] सृष्टिधराचार्या: अपादाने पाणिनीयसूत्राणि विस्तरेण विवृण्वन्ति।[44] किन्तु विवरणे तै: किञ्चिदपि मौलिकचिन्तनं नो प्रस्तूयते। रामचन्द्राचार्योऽपि अपादाने भाष्यकारमतमनादृत्य सूत्रकारवार्तिककारयो: सर्वाण्यपि लक्षणानि यथावत् स्वीकरोति।[45] उदाहरणैश्च स्पष्टयति। विठ्ठलाचार्य: अपि पाणिनि-कात्यायनयो: मतमेव स्वीकृत्य तत्र विस्तृतं व्याख्यानं प्रस्तौति। जिनेन्द्रबुद्धे: भर्तृहरेश्च मतमपि स्वव्याख्याने स्पष्टीकरोती।[46]

भट्टोजिदीक्षित: अपादानकारकं विवृणोति 'ध्रुवमपायेऽपादानमि'ति सूत्रोल्लेखेन। तदनुसारं यदा धातुना वस्तुद्वये अपाय: उच्यते चेत् अपायस्याधार: अपादानं भवति किन्तु अपायविधायकव्यापारस्य आधार: अधिकरणं न भवति। यथा 'वृक्षात् पर्णं पतति। असौ अपाये ध्रुवस्यार्थे अवधिशब्दं स्वीकरोति।[47] 'अपाये यद् उदासीनं चलं वा यदि चलं वा यदि वाऽचलम्' इति कारिकाया: उद्धरणसहितम् असौ अपादानस्य स्थिरत्वं चलत्वं वा सम्भवति इति प्रतिपादयति। यथा- 'धावतोऽश्वात् पतति।'[48] पृथग्भूयमानस्य वस्तुद्वयस्य मिथ: सापेक्षमपादानत्वं विवक्षया तस्य निर्धारणमपि भट्टोजिदीक्षित: भर्तृहरे: सन्दर्भेण विवृणोति।[49] असौ भाष्यकारदिशा अपादानकारके केषाञ्चन पाणिनीयसूत्राणाम् अनावश्यकत्वमपि विवृणोति किन्तु तन्न समर्थयति।[50]

कौण्डभट्ट: ध्रुवमपायेऽपादानमिति सूत्रव्याख्याने अपाये ध्रुवपदार्थम् अवधिं वदति। तदनुसारञ्च पञ्चमीविभक्ते: अर्थ: अवधिरेव भवति। असौ अपादाने भर्तृहरिणा 'अपाये यद्

[43] तत्रैव, पृ.४२

[44] भाषावृत्यर्थव्यावृत्ति:, पृ.८९-९४

[45] प्रक्रियाकौमुदी, पृ.४२५-४२९

[46] (१) आप्य इति। विशेषो विभाग:……..तस्मिन् साध्य इति विषयसप्तमी……..यद्यपि ध्रुवशब्दो लोके एकरूपताम् आचष्टे ध्रुवमस्य रूपमिति तथाप्यपायं गतिविशेषं प्रति या ध्रुवतोपयुज्यते सा इहेवोपपद्यते स च अवधिभावमेव, प्र.कौ., पृ.४२५, अपाय:, विश्लेष:, विभाग इत्यर्थ:……स चावधिभाव एव, जिनेन्द्रबुद्धि:, काशिका, पृ.५३५. (२) यद्ध्रुवम् अवधिभूतम् इति…………तथा चोक्तम्; अपाये यद् उदासीनं……..अपादानमुच्यते इति। पततो ध्रुव एवाश्वो……….कर्तृत्वञ्च पृथक् पृथक् प्रक्रियाकौमुदी, पृ.४२५., (३) पूर्वस्यायं प्रपञ्च: उत्तरेपि यो पूर्वस्यैव एवं तर्हि पूर्वस्यायं प्रपञ्च: ……एवम् उत्तरेऽपि योग: पूर्वस्यैव प्रपञ्च: वेदितव्य:, जिनेन्द्रबुद्धि:, काशिका, पृ.५३९

[47] ध्रुवं स्थिरम् प्रकृतधातूपात्तगत्यनाविष्टत्वे सति तज्जन्यविभागाश्रय:, प्रौढमनो. पृ.५२६

[48] सिद्धान्तकौमुदी १/४/२४ वा. सूत्रे

[49] प्रौढमनो. पृ.५२७

[50] भाष्यकारस्तु जुगुप्सादीनां……….एवम् उत्तरसूत्राण्यपि, तत्रैव, पृ.५२८

उदासीनं ध्रुवं वा यदि वा चलम्' इत्यादिकारिकोक्तं मतं यथावत् स्वीकरोति।[51] भर्तृहरि: क्रियया उत्पद्यमानस्य अपायस्य अधिकरणं ध्रुवमपादानं वा भवति। तथैव हि क्रियाया: अधिकरणमपादानं न इति।[52] अत्र क्रियाशब्देन व्यापारस्य ग्रहणं न सत् धात्वर्थस्य ग्रहणं क्रियेत इति कौण्डभट्टस्य अभिप्राय:। अनेन च 'वृक्षात् वस्त्रं पतति' इत्यत्र निष्क्रियेऽपि वस्त्रे वृक्षगतक्रियया पतिते वृक्षोऽपादानं भवति।[53]

वाक्यपदीयस्य अनुकरणेन कौण्डभट्ट: अपादानं त्रिधा विभनक्ति। तत्र युक्तानि उदाहरणानि अपि प्रस्तौति।[54] मानसापायमप्यसौ उदाहरणै: स्पष्टयति।[55] कौण्डभट्टस्य अपादानसम्बन्धीनि मतानि हरिवल्लभ: सुष्ठुतया विवृणोति।[56]

नागेशानुसारम् अपादानमपादानशक्तिमत् भवति। तदनुसारं पञ्चमीविभक्ते: बोध्यं अपादानत्वशक्तिरेव। 'अपादाने पञ्चमी' सूत्रस्य अयमेव अभिप्राय:। नागेश: शक्तिं शक्तेराश्रयञ्च समानमेव स्वीकरोति। अत: अपादानम् अपाशक्तिमान् च अभिन्नौ भवत:। पाणिनीये अपादानलक्षणे 'ध्रुवमपायेऽपादानम्' इत्यत्र नागेशस्य स्वीकृति: अस्ति अथ च भट्टोजिदीक्षितकौण्डभट्टाभ्यां तत्र ध्रौव्ये प्रस्तुतानि विवरणानि अपि नागेशस्य सम्मतानि।[57] भाष्यकारदिशा च मानसापाय: वास्तविक: अपायश्च द्वावपि अपादानेऽस्य स्वीकृतौ।[58]

अपादाने ध्रौव्यमधिकृत्य भर्तृहरे: चर्चामपि नागेश: विवृणोति।[59] सिद्धान्तकौमुद्यां भट्टोजिदीक्षितेन उदाहृतानां प्रयोगाणां समीक्षणेन नागेश: अपादानकारकं स्पष्टयति।[60]

कायसंसर्गाद् बौद्धिकसंसर्गाद्वा अपायविवक्षायां तत्र यदवधिभूतं ध्रुवं तद्धि अपादानत्वेन लक्षितमपादानलक्षणे। तत्र लक्ष्योऽपायः लक्षणञ्चापादनं भवति।

---

[51] अवधि: पञ्चम्यर्थ:, अपादाने पञ्चमी, तच्च अवधिभूतम् इति भाव:। उक्तञ्च वाक्यपदीये अपाये यदुदासीनं…….पृथक् पृथक् इति, वै.भू.सा. पृ.१७८-१७९

[52] एवञ्च विश्लेषहेतुक्रियानाश्रये सति विश्लेषाश्रयत्वं फलितम्, तत्रैव, पृ.१७९

[53] क्रिया च धात्वर्थो…………वृक्षाद् वस्त्रं पततीति संगच्छते, तत्रैव, पृ.१८०

[54] तत्रैव, पृ.१८४

[55] तत्रैव, पृ.१८३-१८४

[56] तत्रैव, पृ.१७८-१८४

[57] पञ्चम्या अपादानत्वम् अर्थ:……………ध्रुवमपायेऽपादानमिति सूत्रात्।, लघुमञ्जुषा, पृ.१२८४-१२८५

[58] तत्रैव, पृ.१२८५

[59] तत्रैव, पृ.१२८७

[60] तत्रैव, पृ.१२८९-१२९८[51] अवधि: पञ्चम्यर्थ:, अपादाने पञ्चमी, तच्च अवधिभूतम् इति भाव:। उक्तञ्च वाक्यपदीये अपाये

अनयोरुभयोरपि अन्यतरस्य वा मानसिकसत्तयां सत्यामपि अपादानस्य प्रयोगः दृश्यते। आचार्यः पतञ्जलिः अपायस्य अपादानस्यापि व्यापकतरम् अर्थं स्वीकरोति । अथ च अपादनसंज्ञाविधायकानां केषाञ्चन पाणिनीयसूत्राणाम् आनर्थक्यं प्रतिपादयति भाष्ये । यतः प्रथमादेव अपादानलक्षणसूत्रात्[61] असौ मानसमपायमपि अपादानत्वेन उक्ते सति अग्रिमसूत्रोक्तविषयाणामपि तत्र समावेशः भवति । अपायस्य संयोगपूर्वकवियोगरूपत्त्वात् तस्य मानसिकसत्ता अपि तत्र ग्रहीतुं शक्या । यथा हि कश्चित् भये संकटे वा उपस्थिते तस्य अनुभवं मनसैव करोति । तत्र च संयोगः वियोगरूपः अपायः अपि मानसः एव भवति । अत एव अपादानसंज्ञा पञ्चमी विभक्तिरपि ध्रुवमपायेऽपादानमिति सूत्रेणैव साधयितुं शक्या नात्र पृथक् सूत्रस्यावश्यकताऽस्ति । एवमेव अन्यत्रापि मानसापायस्य स्वीकारेण प्रयोगाणां सिद्धिः शक्या । यथा सांकाश्यकेभ्यः पाटलिपुत्रकाः आढ्यतराः इत्युदाहरणे सांकाश्यकानां समृद्धिमत्त्वस्य पाटलिपुत्रकगतस्य अपायस्य मानसभूतत्वेऽपि उक्तसूत्रेणैव सिद्धिः शक्या । नात्र सूत्रान्तरापेक्षाऽस्तीति पतञ्जलेः मतिः । किन्तु महर्षिः पाणिनिः सुकुमारमतीनामध्येतॄणां[62] बोधाय बौद्धिकगौरवरूपदोषपरिहाराय च मुख्यसूत्रेण सह अन्यान्यपि सूत्राणि चकार इति मत्या पाणिनेरैव मतमादृतमुत्तरवर्तिभिः वृत्तिकारादिभिः । तद्धि मतं साधीयः इति मतिरुदेति ।

[61] पा सू १/४/२४

[62] निर्धारणे विभक्ते यो भीत्रार्थानां च यो विधिः ।
उपात्तापेक्षितापायः सोऽबुधप्रतिपत्तये ॥ वा. प. ३/७/१४७

# “कर्मणा यमभिप्रैति स सम्प्रदानम्” इति सूत्रविचारः

**जयवन्तः चौधरी**

भगवान् पाणिनिः अष्टाध्याय्यां प्रथमाध्याये चतुर्थे पादे कारके इत्यधिकृत्य ध्रुवमपायेऽपादानम्[1] इत्यादिभिः सूत्रैः कारकसंज्ञां विदधत् अपादानादिविशेषसंज्ञाः अपि व्यधासीत्। द्वितीयाध्याये तृतीये पादे अनभिहिते[2] इत्यधिकृत्य कर्मणि द्वितीया इत्यादिभिः त्रिसप्तत्या सूत्रैस्सप्त विभक्तीः व्यधात् । आदावपादानादिकारकाणामभिज्ञानन्ततः कारकविभक्तीनां प्रवर्तनमित्ययं क्रमः अष्टके दृश्यते। तत्र कारकेषु सम्प्रदानकारकविधायकसूत्रं प्रबन्धेऽस्मिन् विमृश्यते।

अष्टाध्याय्यां प्रथमाध्यायस्य चतुर्थपादे "कारके" इत्यधिकारे वर्तते "कर्मणा यमभिप्रैति स सम्प्रदानम्[3]" इति सूत्रम्। कर्मणा यम् अभि प्र एति सः सम्प्रदानम् इति सप्तपदात्मकमिदं सूत्रम्। "कुगतिप्रादयः" इति सूत्रस्थम् "उदात्तवता गतिमता च तिङा गतेः समासवचनम्" इति वार्तिकमत्र प्रमाणम् । 'देवो देवान् क्रतुना पर्यभूषयत्[4]' 'यस्मानृ ऋते विजायन्ते जनासो' इत्यादीन्युदाहरणानि। अत्र तिङन्तमुदात्तवद्भवति "यद्वृत्तान्नित्यम्[5]" इति निपातप्रतिषेधात्। तत्र आचार्यः हरदत्तः - वार्तिकमेतच्छन्दोमात्रविषयम्, अयमभिप्रैतीत्यत्रापि समासे सति प्रातिपदिकत्वात् विभक्त्युत्पत्तिर्माभूदित्येतदर्थम्[6] इति । छन्दोवत्सूत्राणि भवन्ति[7] इति मतमाश्रित्य अत्र समासोऽवश्यं भवतीति केचित्। अस्य भाषाविषयत्वे तु यत् प्रकुरुते इत्यादौ समाससंज्ञायां सोः उत्पत्तिः स्यात् । लिङ्गसर्वनामनपुंसकतामभ्युपेत्य स्वमोर्नपुंसकात् इति सूत्रेण कृते लुकि ह्रस्वो नपुंसके प्रातिपदिकस्येति ह्रस्वापत्तिः । यत् प्रकुर्वीरन् इत्यत्र तु

---

[1] अष्टाध्यायी सूत्रपाठः – 1.4.24

[2] अष्टाध्यायी सूत्रपाठः – 2.3.1

[3] अष्टाध्यायी सूत्रपाठः – 1.4.32

[4] वै. सि. कौ. - बालमनोरमाव्याख्या - सह सुपा – 2.1.4

[5] अष्टाध्यायी सूत्रपाठः – 8.1.66

[6] काशिकाव्याख्या पदमञ्जरी – 1.4.32 कर्मणा यमभिप्रैति स सम्प्रदानम्

[7] पातञ्जलमहाभाष्यम् – 1.1.1 वृद्धिरादैच्, नवाह्निकरूपः प्रथमः खण्डः, पृ. सं -153

नलोपापत्तिरिति वार्तिकस्य छन्दोविषयत्वमवश्यमभ्युपेयम्।

सूत्रे यं स ग्रहणं व्यर्थमध्याहारेणापि सर्वनामद्वयार्थस्य लाभात् । न च यं स इत्युपदेशाभावे राजा विप्राय गां ददाति इत्यत्र राज्ञः सम्प्रदानसंज्ञाविधाने गोः कर्मसंज्ञा न स्यात्। गो इत्यस्यावश्यं कर्मसंज्ञा भवति। कर्तुरीप्सिततमं कर्म[8] इति सूत्रे कर्तृपदं न कर्तृसंज्ञापरम्। अपि तु स्वतन्त्रोपलक्षकम्। राजा च दानक्रियायां स्वतन्त्रः। अतः स्वतन्त्रत्वात् ईप्सिततमस्य गोः कर्मसंज्ञा सिद्ध्यति। अपि च अभिप्रयतः कर्तुः सम्प्रदानत्ववारणाय यं स ग्रहणम्। तथाहि - अभिप्रैतीति कर्तृतिङ्वृत्त्या यः सः इत्येव लभ्यते। तथा च तदर्थसम्बन्धेनैव निराकाङ्क्षतया यं सः इत्यध्याहारो नोपपद्यते। तथा च कर्मणा यः अभिप्रैति स सम्प्रदानम् इति सूत्रार्थलाभात् कर्तुरेव सम्प्रदानत्वापत्तिः। कर्तृसंज्ञा तु अकर्मकधातुस्थले सावकाशा स्यात्। उपाध्याया शिष्येण गौर्दीयते इत्यर्थे शिष्यायोपाध्यायस्य गौर्दीयते इति प्रयोग आपद्यत इति दोषः। अतः सूत्रे यं सग्रहणं कर्तव्यम्। तेन अभिप्रयतुः कर्तुः सम्प्रदानत्वं वारितं भवति।

कर्मणा यमेति गच्छति प्राप्नोति सम्बध्नातीत्यर्थः उपसर्गद्वयाभावेपि लभ्यत एवेति उपसर्गद्वयग्रहणमनर्थकम् । सन्निहितसम्प्रदानस्थले दानस्य तत्काले विप्रसन्तोषरूपहृष्टफलत्वात् तत्रैव सम्प्रदानत्वं स्यात्; असन्निहितसम्प्रदानस्थले विप्राय ददातीति न स्यात् उपसर्गद्वयग्रहणाभावे। सूत्रेऽभिराभिमुख्येऽस्ति। प्रशब्दश्चादिकर्मणि। कर्मणा करणभूतेन कर्ता क्रियारम्भे यमुद्दिशति सः सम्प्रदानमिति सूत्रार्थः पर्यवस्यति। स चोद्देश्यः सन्निहितेऽसन्निहिते च सर्वत्र वर्तत इति विप्राय गां ददाति, विप्राय गामदात्, विप्राय गां दास्यतीत्यादिप्रयोगा अप्युपपद्यन्ते । त्यज्यमानद्रव्योद्देश्यत्वे सति स्वीकारार्हत्वं सम्प्रदानत्वमिति लक्षणं दृश्यते सम्प्रदानस्य। स्वीकारश्चात्र यथेष्टविनियोगयोग्यतोपधायकः प्रतिग्रहः। विप्राय गां ददातीत्यत्र त्यज्यमानद्रव्योद्देश्यत्वं कर्तुर्विप्रेऽस्ति। यथेष्टविनियोगयोग्यता उपाधायकप्रतिग्रहत्वं च विप्रे वर्तत इति लक्षणसमन्वयः। उद्देश्यत्वस्वीकारे च गवा विप्रस्य सम्बन्धः। उद्देश्यत्वं हि त्यागकालीनचतुर्थ्यन्तपदोच्चारणजन्यज्ञानविषयत्वम्।

यथोक्तं कर्तुरीप्सिततमं कर्म इत्यत्र कर्तृपदं स्वतन्त्रोपलक्षकम्[9] इति। स्वातन्त्र्यं च

---

[8] अष्टाध्यायीसूत्रपाठः – 1.4.49यदुदासीनं........पृथक् पृथक् इति, वै.भू.सा. पृ.१७८-१७९

[9] कर्मसंज्ञायां हि कर्तृग्रहणं स्वतन्त्रोपलक्षणार्थमिति तेन शिष्यस्य कर्तृ त्वाभावेऽपि गोः कर्मसंज्ञा युज्यत एव। काशिकाव्याख्या पदमञ्जरी – 1.4.32 कर्मणा यमभिप्रैति स सम्प्रदानम्

हीयते इत्यत्र कर्मणि लकारस्सिद्धो भवति। सार्थ एनं जहाति इत्यस्मिन् वाक्ये कर्मणि प्रत्ययेऽयं सार्थात् हीयते इति प्रयोगस्योपपत्तिर्भवतीत्यर्थः । सार्थो नाम मनुष्यसमुदायः, समुदायश्च समुदाय्यवयवाभिन्नोऽयमिति तत्समुदायावयव इति सार्थस्य अपादानत्वेपि निरुक्तस्वातन्त्र्यं सार्थस्यास्त्येवातः कर्मणि प्रत्यये सार्थात् हीयत इत्ययं प्रयोगः सूपपन्नः। अर्थात् हीयत इत्यत्र सार्थस्य धात्वर्थप्रधानव्यापाराश्रयत्वेऽपि अपादाने चाहीयरुहोरिति[10] ज्ञापकात् कर्मप्रत्ययान्ते हीधातुना योगे अपादानत्वम्, सार्थेन त्यज्यतेऽयमित्यर्थः । अत्र कर्मसंज्ञायां कर्तृपदं स्वतन्त्रोपलक्षकम्। अतः कर्मणि लकारस्य सिद्धिर्भवति।

चतुर्थी कारकविभक्तिः । कारकचतुर्थ्याः सम्प्रदानशक्तिमान् अर्थः । सा च शक्तिः तत्तद्धात्वर्थकर्मनिष्ठफलनिरूपकत्वेन इच्छाविषये यस्तन्निष्ठा। विप्राय गां ददातीत्युदाहरणम्। अत्र लक्षणसमन्वयः तत्तद्धात्वर्थसम्बन्धि यत्कर्म गवादि, तन्निष्ठं यत्फलं स्वत्वादि तन्निरूपकत्वेन य इच्छाविषयः गोनिष्ठस्वत्वनिरूपको भवतु इति दातुरिच्छाविषयः ब्राह्मणादिस्तस्य सम्प्रदानसंज्ञा।

अन्वर्थसंज्ञालाभाय सम्प्रदानमिति महती संज्ञा क्रियते। तेन सम्यक् प्रदीयतेऽस्मायिति तत् सम्प्रदानमिति फलति। दानक्रियाकर्मणा कर्ता यमभिप्रैति सम्बध्नाति ईप्सति वा तत् कारकं सम्प्रदानसंज्ञकं भवतीत्यर्थः। तेन अजां ग्रामं नयति, हस्तं वृक्षे निदधाति इत्यादौ सम्प्रदानसंज्ञा न भवति । स्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्त्यनुकूलव्यापारः दानमित्युच्यते । किञ्चित् उद्दिश्यापुनर्ग्रहणाय स्वद्रव्यत्यागो वा दानम् । यथा - "कृष्णाय पारिजातं ददाति" इति । स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनं वा दानम्। अतः रजकस्य वस्त्रं ददाति इत्येव प्रयोगः न तु रजकाय वस्त्रं ददातीति । यतः अत्र स्वस्वत्वनिवृत्तिः नास्ति नापि परस्वत्वापादनम् इति वृत्तिकृन्मतम्।

भाष्यकारः नान्वर्थसंज्ञायामाग्रहवान् इत्यतः रजकाय वस्त्रं ददातीत्यपि प्रयोगः साधुरेव। दा-धात्वर्थः अत्र भाक्तः लाक्षणिकार्थप्रतिपादक इत्यर्थः। भक्तिर्लक्षणा तत् प्रयोज्यः भाक्तः। तत्र प्रमाणन्तु खण्डिकोपाध्यायः (वृद्धाध्यापकः / अथर्ववेदशाखाध्यापको वा) शिष्याय चपेटां (प्रसृतकरतलं चपेटा) ददाति[11] इति वृद्धिरादैच् इति सूत्रस्थः भाष्यप्रयोगः। अत्र दुःखं फलम्।

[10] अष्टाध्यायी सूत्रपाठः – 5.4.45

[11] पातञ्जलमहाभाष्यम् – 1.1.1 वृद्धिरादैच्, नवाह्निकरूपः प्रथमः खण्डः, पृ. सं - 170

ददातिरत्र संयोगविशेषानुकूलव्यापारार्थकः । चपेटासंयोगजन्यदुःखाश्रयः शिष्यः भवतु इतीच्छया दुःखरूपफलाश्रयत्वेन शिष्यस्य सम्प्रदानत्वम् । रजकाय वस्त्रं ददातीत्यत्र दा-धातुः अधीनीकरणार्थकः । अधीनीकरणत्वञ्च मलनाशानुकूलं स्थापनम् । तथा च वस्त्रनिष्ठमलनाशरूपफलसम्बन्धेन भृतिमान् रजको भवत्वितीच्छया रजकस्य भृतिरूपफलाश्रयत्वेन सम्प्रदानत्वम् । विप्राय गां ददाति इत्यत्र विप्रस्य शेषित्वम् । गोश्च शेषत्वम् । शेषित्वञ्च धात्वर्थक्रियायाः यत्कर्म तद्वृत्तिमत् धात्वर्थफलं तत्सम्बन्धजन्यफलाश्रयत्वकेच्छाविशेष्यत्वम् । दानकर्मगोवृत्तितादृशस्वत्वसम्बन्धजन्यसुखाश्रयो विप्रः भवत्वित्याकारिका येच्छा तादृशेच्छाविशेष्यत्वरूपं विप्रस्य शेषित्वं तादृशेच्छाप्रकारताश्रयत्वरूपं च गवि शेषत्वमिति समन्वयोऽत्र द्रष्टव्यः ।

सम्प्रदानं हि त्रिविधम् -

**अनिराकरणात्कर्तुः त्यागाङ्गं कर्मणेप्सितम् ।**
**प्रेरणानुमतिभ्याञ्च लभते सम्प्रदानताम्**[12] **॥**

अनिराकर्ता, प्रेरयिता, अनुमन्ता इति सम्प्रदानस्य त्रयो भेदाः सूर्याय अर्घ्यं ददातीत्याद्यम् । अत्र सूर्यः न वा अर्घ्यदानं प्रार्थयते, नाप्यनुमन्यते, न च निराकरोति । विप्राय गां ददातीति प्रेरयितुरुदाहरणम् । अत्र मह्यं गां देहि इत्येवं विप्रेण प्रार्थितः राजा तस्मै गां ददाति । विप्रे दानात्पूर्वं दानव्यापारप्रेरकत्वमस्ति । उपाध्यायाय गां ददातीति अनुमन्तुरुदाहरणम् । चतुर्थ्याश्च उद्देश्योऽर्थः ।

अकर्मकस्थलेषु कर्मणोऽभावात् कर्मणाभिप्रेयमाणं सम्प्रदानमित्येतन्न सम्भवतीति 'पत्ये शेते' इत्यादिषु सम्प्रदानसंज्ञा, तन्निमित्तिका चतुर्थी च दुर्लभा । अतस्तत्र वार्तिकमुक्तम् - क्रियाग्रहणम्[13] इति । क्रियाग्रहणमपि कर्तव्यम्, इहापि यथा स्यात् - श्राद्धाय निगर्हते, युद्धाय सन्नह्यते, पत्ये शेते[14] - इति कर्मणा यमभिप्रैति स सम्प्रदानम् इति सूत्रस्थं भाष्यम् । एवञ्च क्रियया यमभिप्रैति सोपि सम्प्रदानमिति वक्तव्यम् इति वार्तिकस्याशयः । श्राद्धविषयकनिन्दामाविष्करोति, युद्धविषयकं सन्नहनपूर्वकं निश्चयं करोति, पतिमुपसृत्य शेते

[12] वाक्यपदीयम् – 3.7.129

[13] पातञ्जलमहाभाष्यम् – 1.4.32 कर्मणा यमभिप्रैति स सम्प्रदानम्, द्वितीयः खण्डः, पृ. सं. 256

[14] पातञ्जलमहाभाष्यम् – 1.4.32 कर्मणा यमभिप्रैति स सम्प्रदानम्, द्वितीयः खण्डः, पृ. सं. 256

इत्येवमर्थः इति तत्र कैयटः।

कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्यय[15] इति न्यायात् सूत्रे च कर्मपदं कारकपरं, न क्रियापरम्। क्रियाया अपि कर्तुरीप्सिततमं कर्मेति सूत्रेण कर्मसंज्ञा सम्भवतीति प्रदर्श्य वार्तिकं प्रत्याचख्ये भाष्यकारः। तथाहि क्रिययापि क्रिया ईप्सिततमा भवति, सन्दर्शनक्रियया प्रार्थयतिक्रियया अध्यवस्यतिक्रियया चेति तत्रत्यं वाक्यम्। तस्यायमाशयः - मायोपहितचैतन्याभिन्नेन आत्मना साधनेन कर्ता सन्दर्शनक्रियाम् (यत्किञ्चित्फलविषयिकां सङ्कल्पनक्रियाम्) ईप्सति, अतः सन्दर्शनक्रियायाः कर्मसंज्ञा। सन्दर्शनक्रियया च प्रार्थयतिक्रिया आप्तुम् इच्छति, अतः प्रार्थयतिक्रियायाः कर्मसंज्ञा। प्रार्थयतिक्रियया अध्यवस्यतिक्रियाम् (कया चेष्टया फलं मे सिध्येत् इति सम्यक् विचिन्त्य, कञ्चिच्चेष्टाविशेषं फलसाधनत्वेन विनिश्चिनोति, तामिमां निश्चिनोतिक्रियाम्) आप्तुम् इच्छति, अतः अध्यवस्यतिक्रियायाः कर्मसंज्ञा। अध्यवस्यतिक्रियया आरम्भणक्रियाम् आप्तुमिच्छति, अतः आरम्भणक्रियायाः कर्मसंज्ञा। आरम्भणक्रियया शयनादिं निश्चितां क्रियामीप्सति, एवञ्च शयनादिक्रियायाः कर्मसंज्ञा। तथाभूतेन कर्मणा पत्यादेरभिप्रेयमाणता सम्भवत्येवेति यथास्थितसूत्राक्षरैरेव पत्ये शेते इत्यादिप्रयोगा उपपद्यन्त इत्यतः क्रियाग्रहणं न कर्तव्यमिति फलति।

इयं च साधनपरम्परा आत्मादिरारम्भावधिका सर्वक्रियाविषयिका, अतः सर्वेषामपि कर्मसंज्ञकानां क्रियारूपकर्मणाभिप्रेयमाणत्वस्य अव्यभिचारात् सम्प्रदानत्वमापद्यते इत्याशङ्का न कार्या; विप्राय गां ददातीत्यादौ, पत्ये शेते इत्यादौ च सावकाशायाः सम्प्रदानसंज्ञायाः अनवकाशा कर्मसंज्ञा बाधिका भवति, अतः कटं करोति इत्यादौ इष्टं सिध्यति। पर्यायप्रसङ्गः न शङ्क्यः, गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि[16] इति सूत्रेण अध्वभिन्ने गत्यर्थानां कर्मणि चेष्टायां द्वितीयाचतुर्थ्यौ विहिते इति ततोऽयत्र पर्यायः अनिष्ट इति फलति। इति शम्।

[15] पातञ्जलमहाभाष्यम् – 1.1.23 बहुगणवतुडति सङ्ख्या, नवाह्निकरूपः प्रथमः खण्डः, पृ. सं. 303

[16] अष्टाध्यायीसूत्रपाठः – 2.3.12

# वर्तमानसमाजे प्राचीनधर्मशास्त्रनिरूपितदायभागस्य प्रासङ्गिकत्वम्

ड. अञ्जनदासः

शोधसारः- वर्तमानभारतीयसमाजोऽतीव स्वार्थकेन्द्रिकः। अस्मिन् समाजे विभिन्नविषये मानवानां मध्ये हिंसा भवति मतपार्थक्यात्। तदर्थं सर्वकारेण विविधविधिः प्रचलितः। तत्र दायभागविषये हिन्दूनां कृतेऽपि अर्वाचीनहिन्दुविधिः प्रतिपादितः। तत्र प्रामाणिकधर्मशास्त्रस्य समयानुसारेण परिवर्तनं परिमार्जनं कृतम्। फलतः पारिवारिकसंहतिः, परस्परयोर्मध्ये ऐक्यभावः इत्यादयः विनष्टाः। कथं विनष्टः, ततः मुक्तेरुपायः अस्मिन् शोधनिबन्धे मया प्रतिपादितः सयुक्त्या। किञ्चात्र अर्वाचीनहिन्दुविधिना सह धर्मशास्त्रस्य पार्थक्यमपि निर्दिष्टमिति।

कूटशब्दाः- आचारः, व्यवहारः, प्रायश्चित्तः, दायः, स्त्रीधनम्, आधुनिकविधिः

धर्मशास्त्रं हि भारतवर्षस्य प्राचीनतमं प्रामाणिकं शास्त्रम्। अस्य शास्त्रस्य नामान्तरं हि स्मृतिरिति। वस्तुतः शास्त्रेऽस्मिन् न केवलं धर्माधर्मविषये विचारो दृश्यते। अपि तु समाजे प्रचलनार्थं येषां येषामुपादानानामावश्यकता वर्तते प्रायः तेषां तेषां विषयाणामालोचनमत्र विहितम्। तथा चा धर्मशात्रे प्राधान्येन त्रयो मुख्यविषया निरूपिता महर्षिभिः- आचारः, व्यवहारः, प्रायश्चित्तञ्चेति। विज्ञानेश्वरादिभिः भाष्यकारैरपि कृत्स्नं धर्मशास्त्रं षोढा विभज्य त्रिषु अध्यायेषु हि तेषामन्तर्भावः कृतः। यथा आचाराध्याये वर्णधर्म-आश्रमधर्म-वर्णाश्रमधर्म-साधारणधर्माणामालोचना विहिता, व्यवहाराध्याये शास्त्रीयाभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनादिरूपो गुणधर्मः आलोचितः, प्रायश्चित्ताध्याये च विहिताकरणप्रतिषिद्धसेवनरूपस्य निमित्तधर्मः स्वीकृतः। अत्र च षड्विधेषु स्मार्तधर्मेषु गुणधर्मोऽन्यतमः। गुणधर्मे आलोचितविषयः दुष्टनिग्रहमन्तरेण न सम्भवति। दुष्टपरिज्ञानञ्च न व्यवहारदर्शनमन्तरेण सम्भवति। ननु अत्र व्यवहारशब्दस्य कोऽर्थ इति जिज्ञासायामुच्यते 'वि'उपसर्गात् 'अव'उपसर्गाच्च 'हृ'धातोः 'घञ्'प्रत्यये व्यवहारशब्दो निष्पन्नः। ततश्च तस्यार्थो भवति-

**"विनानार्थेऽवसन्देहे हरणं हार उच्यते।**
**नानासन्देहहरणाद्व्यवहार इति स्मृतः॥"**[1] **इति।**

वस्तुतः धर्मशास्त्रसमाचारविरुद्धेन मार्गेण परैरभिभूतो यद्राज्ञे प्राड्-विवाकाय वा विज्ञापयति तदेव व्यवहारपदवाच्यं भवतीति योगीवरयाज्ञवल्क्यमतम्-

**"स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः।**
**आवेदयति चेद्राज्ञे व्यवहारपदं हि तत्॥"[२] इति।**

स च व्यवहारो भाषा-उत्तर-क्रिया-साध्यसिद्धिभेदेन पादचतुष्टयात्मकः। किञ्च प्रतिज्ञा-उत्तर-संशय-हेतु-परामर्श-प्रमाण-निर्णयप्रयोजनात्मको भवति व्यवहारः तस्य पदं विषयः व्यवहारपदमित्युच्यते, स च द्विविधः- शंकाभियोगः तत्त्वाभियोगश्चेति। पुनश्चायम् अष्टादशधा भिद्यते ऋणादान-निक्षेप-अस्वामिविक्रय-सम्भूयसमुत्थान-दत्तानपकर्म-वेतनादान-संविद्व्यतिक्रम-क्रयविक्रयानुशय-स्वामिपालविवाद-सीमाविवाद-वाक्पारुष्य-दण्डपारुष्य-स्तेय-साहस-स्त्रीसंग्रहण-स्त्रीपुंधर्म-दायभाग-द्युतसमाह्वयभेदेनेति। तदुक्तं भगवता मनुना-

**"तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः।**
**संभूय च समुत्थानं दत्तस्यानपकर्म च॥**
**वेतनस्यैव चादानं संविदश्च व्यतिक्रमः।**
**क्रयविक्रयानुशयो विवादः स्वामिपालयोः॥**
**सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके।**
**स्तेयं च साहसं चैव स्त्रीसंग्रहणमेव ॥।**
**स्त्रीपुंधर्मो विभागश्च द्युतमाह्वय एव च।**
**पदान्यष्टादशैतानि व्यवहारस्थिताविह॥"[३] इति।**

अत एव दृश्यते धर्मशास्त्रे विचारितेषु अष्टादशव्यवहारपदेषु दायभागोऽतीव विशिष्टं स्थानमलंकरोति। 'विभक्तव्यं पितृद्रव्यं दायमाहुर्मनीषिणः' इति निघण्टुवचनात् दायस्तावत् पैतृकधनम् अर्थात् पैतृकधनं दाय इति पदेनोच्यते। व्युत्पत्त्यनुसारं दा-धातोः घञ्प्रत्यये दाय इति, ल्युट्प्रत्यये दानं चेति निष्पद्यते। दीयते इति व्युत्पत्त्या दायरूपेण पितृधनं पुत्रा नैव गृह्णन्ति। अर्थात् स्वर्गगामी पिता पुत्राय स्वधनं न ददाति। तत्रापि दीर्घरोगग्रस्तो पिता पुत्रेभ्यः स्वधनं दातुं न समर्थो भवति। अत एव दीयते इति व्युत्पत्त्या दायशब्दस्य यः प्रयोगः स गौणः। प्रसङ्गेऽस्मिन् जीमूतवाहनेन कथितम् 'मृतादीनां स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्त्वस्वरूपकफलसाम्यात् मृतादीनां तत्र त्यागो नास्ति' इति। तथा च दाय-ददातिशब्दयोर्गौणत्वोपन्यासानर्थक्यं सर्वथा अवयवराहित्ये निरूढत्वं न च यौगिकम्, तत्र मृतादीनां त्यागाभावात्। यदि त्यागो भवेत् तर्हि पितुर्मरणानन्तरं च कोऽपि धनं ग्रहीतुं समर्थो स्यात्। अतः दायशब्दः विभाजनीये पैतृकधने रूढः।

अस्मिन् संसारे सर्वे जना एकत्र स्थातुं न समर्था भवन्ति, मतपार्थक्यादिदर्शनात्। तथाहि तत्र विभागस्यावश्यकता दरीदृश्यते। विभागशब्दस्यार्थो हि विशेषेण भजनं स्वत्त्वज्ञापनं वा विभागः। कात्यायनेनापि तदेव प्रतिपादितम्-

"सकलं द्रव्यजातं यद्भागैर्गृह्णन्ति तत्समैः।
पितरो भ्रातरश्चैव विभागो धर्म उच्यते।।"[४] इति।

साधारणतया दायशब्दस्यार्थो हि यद्धनं स्वामिसम्बन्धादेव निमित्तादन्यस्य सम्भवति तदुच्यते दायपदेन। अत्रेदं वक्तव्यं यत् दायभागशब्दस्य द्विधा व्युत्पत्तिर्दृश्यते- दायस्य भागः दायभागः, अपरा च दायेन सह भागः दायभागः। यदि दायस्य भागः दायभागः इति स्यात्, तर्हि दायरूपेण संस्थितस्य दासीगवादिरूपस्य द्रव्यस्य विनाशापत्तिर्भवेत्। अतः दायस्य भाग इति न समीचीनम्। दायेन सह भागः दायभागः इत्यपि न समीचीनम्। यतः पैतृकधनेन सह वर्तमनेऽपि कश्चन न ममेदं धनं भ्रातुरिदमिति प्रयोगोऽवलोक्यते। अतः वक्तुं शक्यते यत् दायशब्दः न यौगिकः, अपि तु रूढ एव। तदुक्तं नारदेन-

**"विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते।
दायभाग इति प्रोक्तं तद्विवादपदं बुधैः।।"[५] इति।**

यद्भवतु नाम अथ अस्माकं मूलविषयो हि दायभागस्य प्रासङ्गिकता अस्मिन् समाजे। वस्तुतः प्राचीनकाले भारतीया हिन्दवः धर्मशास्त्रानुसारेण परिचलन्ति स्म। परन्तु कालक्रमेण समाजस्य परिवर्तनानुसारं मनुष्यस्य मनसि अपि परिवर्तनं जातम्, तदर्थञ्च विधानेषु बहु परिवर्तनं कृतम्। तत्र भारतीयधार्मिकदायाधिकारव्यवस्थां वंशानुक्रमिकपरम्पराञ्च परित्यज्य पाश्चात्यपरम्परामनुसर्त्तुं प्रवर्तन्ते। यथा 'Hindu Succession Act' इति नूतनविधिः प्रचलितः भारतसर्वकारेण। फलतः समाजे नैकानि परिवर्तनानि भूतानि, येन नैका समस्याः दृश्यन्ते। तस्याः समस्यायाः समाधनं धर्मशास्त्रनिरूपितदायभागे वर्तते स्म। इदानीं क्रमानुसारं तासां समस्यानां समाधानमालोच्यते मया-

प्रथमतः, प्राचीनकाले धर्मशास्त्रानुसारं पितुर्मरणात्परं तस्य धनं दायाधिकारसूत्रेण अधिकं धनं ज्येष्ठपुत्रः गृह्णाति स्म, यतः पित्रभावात् स एव परिवारस्य दायित्वं पिता इव मुख्यत्वेन पालयति-

**"ज्येष्ठ एव तु गृह्णीयात् पित्र्यं धनमशेषतः।
शेषास्तमुपजीवेयुः यथैव पितरं तथा।।"[६] इति।**

परन्तु यदि ज्येष्ठपुत्रः अन्यपुत्रान् प्रवञ्चयन्ति, तर्हि परिवारमध्ये कलहो जायते। तदर्थं धर्मशास्त्रीयदायाधिकारव्यवस्था अधुना विलुप्ता जाता। अपि च 'Hindu Succession Act' इत्यनुसारं सर्वे (माता, पुत्राः कन्याश्च) मिलित्वा पितृधनं समं विभज्य गृह्णन्ति- "The

surviving sons and daughters and the mother of the intestate shall each take one share.'' इति। परन्तु अस्मिन् न्याये दोषोऽस्ति। यतः पितुर्मरणात्परमुत्तराधिकारिरूपेण सर्वे समांशं नेष्यन्ति, तथाहि ज्येष्ठपुत्रोऽपि तस्यांशं नीत्वा स्वचिन्तां करोति, न तु अन्येषाम्। फलतः संसारे संहतिः अवलुप्ता भवति। यद्यपि इयमवस्था सर्वत्र न दृश्यते, तथापि अधिकतया प्राप्यते।

द्वितीयतः, धर्मशास्त्रीयविध्यनुसारं कन्या विवाहानन्तरं तस्याः पितुः सम्पत्तौ उत्तराधिकारित्वं नैव प्राप्नुवती। परन्तु वर्तमानकाले इयं व्यवस्था लुप्ता जाता। वस्तुतः अर्वाचीनहिन्दुविधौ(२००५) कन्या प्रथमश्रेणीकरिक्थिनां मध्ये अन्तर्भुक्ता जाता। फलतः क) जन्मना एव कन्या पुत्र इव स्वाधिकारेण समभागिनी भवति, ख) तस्याः यदि पुत्रोऽस्ति सोऽपि पितृधने अंशी भवति, ग) पितुरंशे तस्यापि पुत्र इव समप्रवणता भवेत् इति। अतः अनेन विधिना समांशत्वेन उभयोरपि समदायित्वं विद्यते, तेन पुत्रकन्ययोर्मध्ये अभेदः परिलक्ष्यते। परन्तु वास्तवे तन्न भवति। तत्र दृश्यते पितुः धनप्राप्त्यर्थं उभयोर्मध्ये मनोमालिन्यं दृश्यते। यतः अत्र विध्यनुसारेण कन्या लाभवती भवति। सा कन्या किमपि दायित्वं न नेष्यति। यथा कश्चन पिता यदि ऋणं कृत्वा म्रियते, तर्हि तदृणं परिशोधयेत् पुत्रः। तदा कन्या ऋणस्य किमपि उत्तरदायित्वं न नयति। फलतः भ्रातृभगिन्योर्मध्ये पवित्रसम्बन्धः विनष्टो भवति।

तृतीयतः, धर्मशास्त्रे सर्वैः स्मार्तैः धनान्तरापेक्षया स्त्रीधनविषये विचारः कृतः विस्तरेण। तत्र स्त्रीधनं न्यूनातिन्यूनं षड्विधमित्युक्तं भगवता मनुना-

**"अध्यग्न्यध्यवाहनिकं दत्तञ्च प्रीतिकर्मणि।**
**भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम्।।"[७] इति।**

वस्तुतः आधुनिकहिन्दुमते यस्मिन् धने केवलं स्त्रिया एव स्वाम्यं तदेव धनं स्त्रीधनम्। तद्धनं मुख्यतः त्रिषु अवस्थासु प्राप्यते। यथा अविवाहितावस्थायां पितृमातृकुलाद् यल्लभ्यते, वागदतावस्थायामुपहाररूपेण यत्प्राप्यते। विवाहकाले भर्तृगृहगमनावस्थायाम् स्वजनानां पक्षतश्च यद्धनं प्राप्तिर्भवति तत्सर्वं स्त्रीधनमिति। एतासु त्रिषु अवस्थासु 'प्रीभि-काउनसिल्' इत्यनेन प्राप्तं स्त्रीधनमपि एकादशविधं भवति- पितृदत्तं, मातृदत्तं, भ्रातृदत्तं. भर्तृदत्तं, भर्तृकुलाल्लब्धं, अग्न्युपागतम्, अध्यावाहनिकम्, आधिवेदनिकमन्वाधेयं, पादवन्दनादिकं, शुल्कं, पुत्रदत्तमिति। एतेषु स्त्रीधनेषु स्त्रियाः सम्पूर्णाधिकारो विद्यते। परन्तु १९५६ ख्रीष्टाब्दात्प्राक् उत्तराधिकारसूत्रेण लब्धे धने तस्याः सम्पूर्णाधिकारो नास्ति। वस्तुतः चतुर्दशधाराबलेन अधिकारोऽयं प्राप्तः-

Property of a female Hindu to be her absolute property.—

1) Any property possessed by a female Hindu, whether acquired before or after the commencement of this Act, shall be held by her as full owner thereof and not as a limited owner. Explanation.—In this sub-section, "property" includes both movable and immovable property acquired by a female Hindu by inheritance or devise, or at a partition, or in lieu of maintenance or arrears of maintenance, or by gift from any person, whether a relative or not, before, at or after her marriage, or by her own skill or exertion, or by purchase or by prescription, or in any other manner whatsoever, and also any such property held by her as STRIDHANA immediately before the commencement of this Act.

2) Nothing contained in sub-section (1) shall apply to any property acquired by way of gift or under a will or any other instrument or under a decree or order of a civil court or under an award where the terms of the gift, will or other instrument or the decree, order or award prescribe a restricted estate in such property.

परन्तु प्राक्काले पत्युर्मरणात्परं विधवापत्नीरूपेण जीवनधारणार्थं केवलं ग्रासाच्छादनं प्राप्तवतीति तु मन्मते नोचितं कर्म। यतः इयं व्यवस्था पुरुषतान्त्रिकसमाजस्य निदर्शनम्। तथाहि आधुनिकविध्यनुसारं सा विधवापत्नी पत्युर्धनस्य सम्पूर्णरूपेण दायाधिकारिणी भवति। किञ्च सा विधवापत्नी तस्या इच्छानुसारं वैवाहिकसम्बन्धः स्थापयतीत्यत्रैव ममापत्तिरस्ति। यतः यदि तस्या विधवायाः कश्चित्सन्तानः अस्ति तर्हि तस्यावस्था कीदृशी भवति तत्तु समाजे दरीदृश्यते। इदानीं कोऽपि एवं वदति यत् तर्हि किं तस्या विधवाया भविष्यत् नास्तीति आशंकायामुच्यते यस्य माता नास्ति तं निकषा जगत् तम इव। अस्मिन् विषये जगज्जननी सारदादेवी आह- "यस्य माता नास्ति स एव केवलं दरिद्रवान्" इति वचनानुसारं वक्तुं शक्यते सन्तानाय मातुरुत्तमं चिन्तनं करणीयम्।

चतुर्थतः, यद्यपि पैतृकधनस्योपरि दायादानामधिकारो वर्तते, तथापि तेषु केचिदयोग्या विद्यन्ते। ते तु क्लीवादयः, ते रिक्थभाजो न भवन्ति। तदुक्तं योगीश्वरयाज्ञवल्क्येन-

**"क्लीवोऽन्धपतितस्तज्जः पंगुरुन्मत्तको जडः।**

**अन्धोऽचिकित्स्यरोगाद्या भर्तव्या स्युः निरंशकाः॥"[८] इति।**

अतः क्लीव-पतित-पतितोत्पन्न-पंगु-उन्मत्त-जड-अन्ध-

अचिकित्सनीयव्याधिपीडितादीनामंशभाक्त्वं नास्ति। भगवता मनुनापि भणितम्-

**"अनंशौ क्लीवपतितौ जात्यन्ध-बधिरौ तथा।**
**उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः॥"**[१]

इति वचनात् वक्तुं शक्यते यद्यपि एते क्लीवादयो न भवन्ति अंशभाजः तथापि ग्रासाच्छादनादिकं सर्वथा विहितम्। परन्तु अर्वाचीनहिन्दुविधौ एतेषामधिकारो वर्तते पितृधने- No person shall be disqualified from succeeding any property on the ground of any disease defect or deformity, or save as provided in this Act on any other ground whatsoever. अतः उत्तराधिकारसूत्रेण ते सम्पत्तिग्रहणे योग्या एव। फलतः पूर्वस्मिन् काले तेषां कृते परिवारे यः स्नेहः आसीत् इदानीन्तु स विलुप्तप्रायः।

पञ्चमतः, प्राचीनदायाधिकारव्यवस्थानुसारं यदि कश्चन ब्राह्मणः ब्राह्मण-क्षत्रिय-वैश्य-शूद्रवर्णेभ्यः चतस्रः भार्या गृह्णाति, ताभ्यश्च ये पुत्रा जायन्ते तर्हि ते वर्णानुक्रमेण उत्तराधिकारिधनं प्राप्नुवन्ति। परन्तु अर्वाचीनहिन्दुविधौ ते पुत्रा इदानीं वर्णानुसारं धनं न गृह्णन्ति, ते तु समांशमर्हन्ति। फलतः यद्यपि मूलवंशपरम्परायाः लोपो भवति तथापि हिन्दुसमाजे एक्यभावप्रतिष्ठा भवेत् इति अर्वाचीनविध्यनुसारम्, तत्र चत्वारः वर्णाः परस्परं समानाः।

षष्ठतः, प्राचीनधर्मशास्त्रीयविध्यनुसारं कश्चन हिन्दुपुरुषः भिन्नसम्प्रदायकन्यां वोढुं न शक्नोति, परन्तु अर्वाचीनविध्यनुसारं स कामपि सम्प्रदायकन्यां वोढुं शक्नोति, अपि च उत्तराधिकारसूत्रेण धनमपि प्राप्नोति। फलतः हिन्दुसमाजे विशृङ्खला जायते, पारिवारिकसंस्कृतिः नष्टा भवति।

सप्तमतः, प्राचीनधर्मशास्त्रीयव्यवस्थानुसारं एकस्य पुरुषस्य मरणात्परमुत्तराधिकारिरूपेण पुत्र-पौत्र-प्रपौत्रैः सह विधवापत्नी, कन्या, माता, पितामही, प्रपितामहीप्रभृतयः गृह्यन्ते, तेषाञ्चाभावे सगोत्रसपिण्डादयो धनभाजो भवन्ति। एतन्मतमर्वाचीनहिन्दुविधौ परिमार्जनं कृतम्। तत्र दायादानां श्रेणीद्वयं कृतम्- प्रथमश्रेणीदायादाः(पुत्रः, कन्या, विधवापत्नी, माता, पौत्रः, पौत्री, दौहित्रः. दौहित्री, विधवापुत्रवधूः, प्रपौत्रः, प्रपौत्री, विधवापौत्रवधूः), तेषञ्चाभावे द्वितीयश्रेणीदायादाः(अ) पिता आ) पौत्र्याः पुत्रः, पौत्र्याः कन्या, भ्राता, भगिनी च इ) दौहित्रस्य पुत्रः, दौहित्रस्य कन्या, दौहित्र्याः पुत्रः, दौहित्र्याः कन्या च ई) भ्रातृपुत्रः, भगिनीपुत्रः, भ्रातृकन्या, भगिनीकन्या च उ) पितामहः, पितामही ऊ) विमाता, भ्रातुः विधवा पत्नी ऋ) पितृव्यः, पितृष्वसा ळ) मातामहः, मातामही ए) मातुलः, मातृष्वसा) इति।

अष्टमतः, प्राचीनधर्मशास्त्रानुसारं अपुत्रधनस्य सम्बन्धिनामभावे तद्धनं राजा गृह्णाति, तद्वत्तु सम्प्रति सर्वकार हि गृह्णातीति शम्।

**तथ्यसूत्राणि-**

१) का. स्मृ.- २६ २) या. स्मृ.- २.५ ३) मनु. स्मृ.- ८.४-७
४) का.स्मृतिः- ७१.१(८३८) ५) ना. स्मृ.- १३.१ ६) मनु. स्मृ.- ९.१०५
७) तदेव- ९.१९४ ८) या. स्मृ.- २.१४० ९) प्रागेव- ९.२०१

**ग्रन्थपञ्जी-**

जीमूतवाहन। दायभागः। सम्पा. अ. सुब्रह्मण्य शास्त्री। दिल्ली: मतिलाल वनारसी दास पावलिशार्स् प्राइभेट् लिमिटेड्, २०१५। मुद्रितम्।
दायतत्त्वविमर्शः। सम्पा. ड. यशवीर सिंह। दिल्ली: अभिषेक प्रकाशन, २००९। मुद्रितम्।
मनुः। मनुसंहिता। अनु. गिरिजाप्रसाद द्विवेदी। लखनौ: नवल किशोर विद्यालय, १९१५(प्रथमसंस्करण)।
स्मृतिनिरुपिता दायभागव्यवस्था। सम्पा. डा हिमांशुशेखर त्रिपाठी। वाराणसी: मनीष प्रकाशन्, २०१५। मुद्रितम्।
हिन्दुविधि। सम्पा. प्र. गिरिजाशंकर मिश्र। लखनौ: हिन्दी समिति, १९७०(प्रथम संस्करण)।
याज्ञवल्क्यः। याज्ञवल्क्यसंहिता। सम्पा. जास्टिस् एस्. एस्. सेट्लार। तिरुपति: राष्ट्रीय संस्कृत संस्थान्,२००७। मुद्रितम् Hindu Succession Act 1956. India. Print.

# भारतीयपरम्परादिशा दाम्पत्यविच्छेदपरिहारोपायाः

**चव्हाण-अविनाशः**

**शोधसारः** -

भारतीयपरम्परायां षोडशसंस्कारेषु मुख्यतमोऽयं विवाहसंस्कारः, अनेन संस्कारेणैव दम्पत्योरविच्छिन्नः सम्बन्धः स्थाप्यत इति जगति प्रसिद्धम् । विवाहसंस्काराद्गृहस्थाश्रम आरभ्यते, असावाश्रम एव सर्वेषामाश्रमाणां जीवातुर्भवति अतः उच्यते "धन्यो गृहस्थाश्रमः"। दम्पती धर्मपूर्वकयज्ञादिं प्रति विवाहसंस्कारादेवाधिकारिणौ । विवाहात्परमुभावपि विवाहप्रयोजनं 'प्रजातन्तोरखण्डता, परस्परसाहाय्येन धर्मार्थकाममोक्षसिद्धिश्च' साधयन्तौ जीवनकालं यापयतः।

किन्त्वद्यत्वे पवित्रेऽस्मिन् गृहस्थजीवने वर्धमानाऽस्त्येका महती समस्या 'दाम्पत्यविच्छेदः (Divorce) इति। वैदिककाले न तथोपलभ्यते स्म समस्या इयम्, किन्तु यदा भारतीयसंविधाने दाम्पत्यविच्छेदः इति अधिनियमः स्थापितस्तदारभ्य विवाहात्परं किञ्चित्कालादेव अविच्छिन्नं बन्धं विस्मृत्य क्षुल्लककारणेनैव विच्छेदाय प्रवृत्ता भवन्ति गृहस्थाः । यदि प्राणहरणादिकादिवद्बलवत्कारणमस्ति चेच्छक्यते कर्तुं दाम्पत्यविच्छेदः किन्तु सन्ति कन्याधनादिकानि क्षुल्लकान्याधुनिककारणानि येषामाधारेण विच्छेदाय प्रवृत्ताः भवन्ति । अस्मिन् पत्रे मुख्यतया वर्धमानाया अस्या दाम्पत्यविच्छेदसमस्यायाः कानिचन आधुनिककारणानि तथा च धर्मशास्त्रादिषु प्रसिद्धानि कानिचन प्राचीनकारणानि सङ्गृह्य दाम्पत्यविच्छेदकारणानां कथं परिहारः कर्तुं शक्यते तच्चिन्तनं क्रियते। तत्कृते पुराणेतिहासकाव्यादिषूपलब्धाभिः कथाभिः कविगुरुजनानामुपदेशैश्च यथाशक्यं तथा विच्छेदपरिहारोपायाः प्रदर्शिताः सन्ति।

**मुख्यशब्दाः** – गृहस्थाश्रमम्, दाम्पत्यविच्छेदः, दाम्पत्यविच्छेदपरिहारोपायाः।

# भारतीयपरम्परादिशा दाम्पत्यविच्छेदपरिहारोपायाः

भारतीयपरम्परायां षोडशसंस्कारेषु विवाह इत्येको मुख्यतमः संस्कारः । तस्मात्परं गृहस्थाश्रम आरभ्यते । विद्यार्जनात्परम् *"अविलुप्त ब्रह्मचर्यः लक्षण्यां स्त्रियाम् उद्वहेद्"* इति याज्ञवल्क्यस्मृतेर्वचनम्।[1] तद्वचनमेवानुसरन् ब्रह्मचर्याश्रमं समाप्य गृहस्थाश्रमप्रवेशार्थोऽयं विधिः 'विवाहः, उपयमः, उद्वाहः, उपयामः, पाणिपीडनम्' इत्यादिभिः षड्भिर्नामभिः प्रसिद्धोऽस्ति।[2] *'आश्रमादाश्रमं गत्वा'*[3] इति स्मृतिः धर्ममयीमिमां काञ्चिद्विशिष्टां जीवनपद्धतिं बोधयति । अनयैव पद्धत्या मनुष्यजीवनं रूपयति महाकविकालिदासोक्तिः – *"शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम्। वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥"*[4] इति। वैवाहिकजीवनं गृहस्थस्य आधारः,स्त्रीपुरुषयोः गृहस्थाश्रमप्रवेशानन्तरमेव 'गृहस्थाश्रमिणौ दम्पती वा' इति संज्ञा भवति । धर्मादिसाधने पत्नी पुरुषस्य शरीरस्याऽर्धं भवतीत्यग्निपुराणे व्यासमहर्षीभिरुक्तम्, तद्यथा – *"जाया त्वर्धं शरीरस्य नृणां धर्मादिसाधने । नाटस्तासु व्यथां काञ्चित् प्रतिकूलं समाचरेत्॥"*[5] भारतीयपरम्परायां विवाहस्य महद्दिव्यं पवित्रं चास्ति प्रयोजनम्, नास्त्ययं विवाहः केवलशारीरिकसुखोपभोगाय।

## समस्या –

अद्यत्वे भारतवर्षेऽपि गृहस्थजीवने 'दम्पतिविच्छेदः' इति काचित्समस्या बाहुल्येन दरीदृश्यते । सैव आङ्गभाषायाम् 'Divorce' इति नाम्ना प्रसिद्धा । नियमानुसारं यदि दम्पतिविच्छेदः (Divorce) भवति चेत्तौ पुनरेकत्रं न वसतः, तथा चापरं विवाहमपीच्छानुसारं कर्तुं शक्नुतः । एकोनविंशतितमे शतके Divorce (दाम्पत्यविच्छेदः) इति कल्पना (Concept) 'Hindu Marriage Act, 1955' एतेन व्यवहारे आनीता । तदनन्तरं भारते बहवः जना अनेनाऽधिनियमाधारेण दाम्पत्यविच्छेदं कृतवन्तः । विच्छेदस्य कारणं योग्यं चेद्वरमेव किन्तु अद्यत्वे क्षुल्लककारणेनापि विच्छेदो भवति तत्तु सर्वदाऽयोग्यम् । अतस्तादृशानि कारणानि अन्विष्य तेषु के के निरोधोपायाः भवितुमर्हन्ति तेषां

---

[1] याज्ञवल्क्यस्मृतिः१.५२

[2] विवाहोपयमौ समौ। तथा परिणयोद्वाहोपयामाः पाणिपीडनम्॥ अमरकोषः २.७.५६

[3] मनुस्मृतिः ६.३४

[4] रघुवंशम् १.८

[5] भविष्यपुराण – १.८.३७

समीक्षणमेतस्मिन् पत्रे कृतम्।

## दाम्पत्यविच्छेदस्याधुनिककारणानि –

आधुनिककारणेषु वधुवरयोर्मतविरुद्धो विवाहः, व्यभिचारः (Adultery) परदारसेवनम्/परपुरुषसेवनम्,[6] नित्यकलहः, परस्परस्य अथवा कस्यचिदेकस्य वा शारीरिकी मानसीकपीडा च,[7] धर्मान्तरम्,[8] दम्पत्योः कस्यचिद्दुर्व्यसनम् (मादकपदार्थसेवनम्), उभयोरन्यथाचिन्तनम् (Misunderstanding), वरदक्षिणायाचना कन्याशुल्कयाचना वा, विवाहात्परं वध्वाः गर्हादिकं पीडनं वा, ननान्दुः (Sister in law) वरमातुः (Mother in law) वा स्नुषया सह विवादः, दाम्पत्योर्मध्ये कस्यचित्संलग्नकुटुम्बे निवसितुं अनिच्छा, अनपेक्षितवेषभूषा, भार्या बलादुपभुक्ताश्चेत्तस्यास्त्यागः, वन्ध्यत्वम्, Virginity, शिक्षणाभावः, अहन्ता (Ego), सन्ति नैकानि एतादृशानि आधुनिककारणानि[9]।

## स्मृत्यादिग्रन्थेषु दाम्पत्यविच्छेदस्यामूनि कारणानि –

स्मृत्यादिग्रन्थेषु दाम्पत्यविच्छेद इति शब्दः साक्षान्नोपलभ्यते किन्तु सन्ति कानिचन कारणानि यैः पतित्यागः पत्नीत्यागश्च भवति स्म, अपरविवाहश्च क्रियते स्म। तानि प्रदीयन्ते क्रमेण –

A. भार्यात्यागस्तथापुनर्विवाहे स्मृत्यादिप्रमाणानि – (Divorce of wife by her husband and remarriage of husband)

**१.वन्ध्यत्वम्** (Barrenness)/**स्त्रीप्रसूः** (Producing female children only), **मृतप्रसवा** (Producing dead children) – मनुना मनुस्मृतौ उच्यते कस्छित्पुत्राप्तुमनाः वन्ध्यां निष्फलां मृतप्रजां कन्याप्रसविनीं पत्नीं वा त्यक्तुमथवा तस्या उदरनिर्वाहस्य सुव्यवस्थां कृत्वा अन्यद्विवाहं कर्तुं शक्नोति - *वन्ध्याऽष्टमेऽधिवेद्याऽब्दे दशमे तु मृतप्रजा। एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥*[10] आचार्यकौटिल्योऽपि तथैव वदति - *वर्षाण्यष्टावप्रजायमानामपुत्रां वन्ध्या चाकाङ्क्षेत। दश बिन्दुं द्वादश कन्याप्रसविनीम् ॥38॥*

---

[6] Hindu Marriage Act, 1955 Section 13 (1) (I)

[7] Hindu Marriage Act, 1955 Section 13 (1) (ia)

[8] Hindu Marriage Act, 1955 Section 13 (1) (vi)

[9] NA. (Feb 3, 2020).

[10] मनुस्मृतिः ९.८१

*ततः पुत्रार्थी द्वितीयां विन्देत ॥39॥*[11]

२.यदि पत्नी **दुर्व्यसनी** (Bad behaviour of wife), सर्वदा **व्याधियुक्ता** (Sick), अथवा **अर्थघ्नी** (Wasting money), **अप्रियवादिनी** वाऽस्ति चेत्सा त्यक्तुं शक्यत इत्युच्यतेऽस्मिन् विषये याज्ञवल्क्यस्मृतौ - *सुरापी व्याधिता धूर्ता वन्ध्यार्थघ्न्यप्रियंवदा । स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ॥*[12]

**३.गर्भविस्रंसिनी** (Abortion) – यदि पत्नी गर्भपातं कर्तुमिच्छति चेत् सा पुराद् बहिस्त्यक्तव्या इति नारदस्मृतौ – स्त्रीधनभ्रष्टसर्वस्वां गर्भविस्रंसिनी तथा । भर्तुश्च वधमिच्छन्तीं स्त्रियं निर्वासयेत् पुरात् ॥[13]

**४.भर्तृहन्तुकामा** (Attempt to kill husband) – यदि भार्या पतिं हन्तुं प्रयतते चेत्तस्यास्त्यागोऽत्यावश्यक इति आचार्यकौटिल्यमतम् - *भर्तारं द्विषती स्त्री सप्तार्तवान्यमण्डयमाना तदानीमेव स्थाप्याभरणं निधाय भर्तारमन्यया सह शयानमनुशयीत ॥*[14] मनुरपि वदति यत् - *संवत्सरं प्रतीक्षेत द्विषन्तीं योषितं पतिः । ऊर्ध्वं संवत्सरात् त्वेनां दायं हृत्वा न संवसेत् ॥*[15]

**५.कलहकारिणी** (Quarrelsome) – यदि पत्नी कलहप्रिया अस्ति, सर्वदैव कुतश्चित्क्षुल्लककारणात्कलहम् आरभते चेत्सापि त्यज्येत इति नारदस्मृतेराशयः– *वन्ध्यां स्त्रीजननीं निन्द्यां प्रतिकूलां च सर्वदा । कामति नाभिनन्देत कुर्वन्नेवं स दोषभाक् ॥*[16] अत्र उपरिनिर्दिष्टानि दुर्व्यसनत्वम्, दीर्घव्याधियुक्तत्वमादीनि नैकानि इतोऽप्यधिकप्रमाणवाक्यानि यैः एतादृश्याः भार्यायास्त्यागः विधीयते धर्मशास्त्रेषु।

B.भर्तृत्यागे पुनर्विवाहे वा स्मृत्यादिप्रमाणानि (Divorce of husband by his wife and remarriage of wife) –

**१.भर्तुः दीर्घकालाभावः** (Absence of husband) – वशिष्ठधर्मस्मृत्यनुसारं यदि पतिः

---

[11] The Kauṭilīya Arthaśāstra (Part – I) 3.2.38-39

[12] याज्ञवल्क्यस्मृतिः १.७३

[13] Nr. XII, 92.

[14] The Kauṭilīya Arthaśāstra (Part – I) 3.3.12

[15] मनुस्मृतिः 9.77

[16] Nr. XII, 94."

शिक्षणादिकार्यार्थं बहिर्गतः किन्तु यथाकालं न पुनरायातः तदा पत्नी पञ्चवर्षाणि प्रतीक्ष्य ततः साऽन्यं प्रति गन्तुं शक्नोति - *प्रोषितपत्नी पञ्चवर्षा प्रवसेद्यद्यकामा यथा प्रेतस्य एवञ्च वर्तितव्यं स्यात् ॥*[17]

**२.पतिः मृतश्चेत्** (Death of husband/widow marriage) – धर्मशास्त्रेषु कस्याश्चन विवाहितायाः भर्ता यदि कस्माच्चित्कारणान्म्रियते चेत्तस्याः पुनर्विवाहो कर्तुं शक्यत इति विषयः समुपलभ्यते। नारदस्मृतौ मृतपतेः भार्यायाः विवाहो भवितुमर्हति इति लभ्यते प्रमाणम्। - *नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ । पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥*[18]

**३.पत्युः वीर्याभावः** (Impotency of husband) – अस्मिन् विषये स्मृतौ क्षेत्रदृष्टान्तेन बीजवान् एव क्षेत्रमर्हति इति वर्णितम् – यथा क्षेत्रस्याधिकारी स एव, यः क्षेत्रे बीजवपनं कर्तुं शक्नोति, यस्य सा क्षमता नास्ति स तत्क्षेत्रं नार्हति तद्वत् प्रजाप्रसवकारणात्स्त्री क्षेत्रमिव अस्ति, तथा पतिः बीजी। अतः यदि पतिः बीजवान् चेत् तस्य स्त्रीक्षेत्रम् – *अपत्यार्थं स्त्रियः सृष्टाः स्त्रीक्षेत्रं बीजिनो नराः । क्षेत्रं बीजवते देयं नाबीजी क्षेत्रमर्हति ॥*[19] यदि पतिः पत्नीक्षेत्रे बीजं वप्तुमसमर्थोऽस्ति चेत्सा वत्सरार्धं प्रतीक्ष्य अन्यं पतिमर्हति – *अक्षिप्तमोघबीजाभ्यां कृतेऽपि पतिकर्मणि । पतिरन्यः स्मृतो नार्या वत्सरार्धं प्रतीक्ष्य तु ॥*[20]

**४.पतितः** (Degraded husband/Bad character) – यदि पतिः सन्मार्गात् धर्मात्पतितश्चेत् पत्नी स्वेच्छया अन्यं प्रति गन्तुमर्हति । यदि पतिः दुषितः चेत् पत्नी तं त्यक्तुं शक्नोति यदि पत्नी दुषिता चेत् पत्या सा स्वेच्छया त्याज्या – *नादुष्टां दूषयेत् कन्यां नादुष्टं दूषयेद्वरम् । दोषे तु सति नागः स्यादन्योऽन्यं त्यजतास्तयोः ॥*[21]

**५.पत्युः संन्यासः** (Takes to asceticism) – यदि कस्याश्चित् पतिः संन्यासमिच्छति चेत्साऽन्यद्विवाहं स्वेच्छया कर्तुमर्हति - *नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ । पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥*[22] 'सन्ति एतानि मुख्यानि प्राचीनाधुनिककारणानि।

---

17 वशिष्ठस्मृति अ. १७ (पृ.क्र. ३८५)

18 नारदस्मृतिः ९७

19 नारदस्मृतिः १९

20 नारदस्मृतिः १६

21 Nr. XII, 31.

22 नारदस्मृतिः ९७

दाम्पत्यविच्छेदस्य परिहारोपायाः

१.गृहस्थाश्रमप्रवेष्टुकामा बोद्धव्याः –

समस्या – विवाहात्परं पत्यौ पत्न्यां वा विद्यमानाः अङ्गानां व्यङ्गादिदोषाः अवलोक्यन्ते चेत् पतिः अथवा पत्नी त्यज्यते।

उपायः - दाम्पत्यविच्छेदस्य कारणेषु दुर्व्यसनादीनि कारणान्युक्तानि, तानि विवाहात्प्रागेवावलोक्यन्ते चेदियं समस्या नापतेत्। परिणयात् प्रागेव धर्मशास्त्रे काव्यादिषु च निरुपितानि वचनानि ध्यातव्यानि। यथा धर्मशास्त्रे केचन कन्यादोषा उक्तास्तान् पूर्वमेव निरीक्ष्य तदुपरि संविचिन्त्य तादृग्दोषरहिता कन्या परिणेया। यदि कन्या दीर्घकुत्सितरोगार्ता (chronic or hateful disease) अस्ति नाम कुष्ठरोगादि युक्ता तथा आधुनिके Cancer इत्यादि व्याधियुक्ता, या अङ्गैः व्यङ्गा अस्ति, यस्याः अन्यपुरुषैः सह सम्बन्धो वर्तते इति पूर्वमेव ज्ञायते चेत्तया सह विवाह एव न कर्तव्यः।[23] तद्वद्वधुपक्षीयैः वरः परीक्षणीयः। वरविषयेऽत्रोच्यते यदि वर उन्मत्तः क्लीबो वा दुर्भगोऽथवा यो बान्धवैः कुतश्चित्कारणात् त्यक्तो, अथवा तेन स्वबान्धवाः त्यक्तास्सन्ति, इतोऽपि यौ द्वौ कन्यादोषौ उक्तौ दीर्घकुत्सितरोगार्तः शरीरावयवैर्व्यङ्गश्चेन्न वरणीयस्स वरस्तदीयैः ।[24] एवं च महाकविनाऽप्युदितमभिज्ञानशाकुन्तले *'गुणवते कन्यका प्रतिपादनीया'* इति[25] एवं प्रागेव उक्तदोषान् समालोक्य विवाहः क्रियते चेद्धातुं शक्येयं समस्या, अथवा एतत्सर्वमपि ज्ञात्वा विवाहः कृतश्चेन्न परस्परं त्यक्तव्यम्।

२.गुरुजनैर्नवोढा उपदेष्टव्या –

समस्या – अद्यत्वे गृहस्थधर्मः (पतिपत्न्योः स्वधर्मश्च) विवाहप्रयोजनञ्च नावगम्यते बहुभिर्नवविवाहितैः अतः केवलभोगेच्छया विवाहिताः विच्छेदं प्रति गच्छन्ति ।

उपायः - लभ्यन्ते प्रसिद्धानि वचनानि नः काव्यादिग्रन्थेषु यत्र क्रान्तदर्शिभिः कविभिः स्ववाक्कलशोज्झितैर्वाक्यामृतैर्वधुवरौ गृहस्थाश्रमधर्मैर्बोधितौ । यथा अभिज्ञानशाकुन्तले कविकालिदासः कस्यचित् मुखेन नवोढां तस्याः धर्मं बोधयति - *'जाते ! भर्तुर्बहुमानसूचकं महादेवी शब्दं लभस्व'*[26] इति, नाम तथा आचरतु यदाचरणेन पतिर्भवत्यां प्रसन्नः सन् भवत्यै

[23] दीर्घकुत्सितरोगार्ता व्यङ्गा संसृष्टमैथुना। दुष्टान्यगतभावा च कन्यादोषाः प्रकीर्तिताः॥ Nr. XII, 36.

[24] उन्मत्तः पतितः क्लीबो दुर्भगस्त्यक्तबान्धवाः। कन्यादोषौ च यौ पूर्वौ एष दोषगणो वरे॥ Nr. XII, 37.

[25] गुणवते कन्यका प्रतिपादनीया। अभिज्ञानशाकुन्तलम् अङ्क ४ (पृ.क्र. ३९१)

[26] अभिज्ञानशाकुन्तलम् अङ्क ४ (पृ.क्र. ३९८)

बहुमानं यच्छेत्। एवञ्च *'वत्से ! वीरप्रसविनी भव'*[27] इत्युक्ते प्रजातन्तोरखण्डतां सम्पादयती त्वां वीरसन्तानं नाम गुणवन्तं पुत्रं पुत्रीं वा प्रसव। *'वत्से ! भर्तुर्बहुमता भव'*[28] - त्वं सदाचारेण पत्युः प्रिया भव, भवत्याः सद्व्यवहारेण न केवलं पतिः अपितु पतिकुलस्था अपि सन्तुष्टा भवेरन्निति। तथा च गृहिणी एव गृहं गृहस्थस्य इति प्रसिद्धं महाभारते।[29] किन्तु कोत्तमा गृहिणी, किदृगाचरणेन लभ्यते गृहिणीपदमिति प्रश्नस्त्ववशिष्यत एव, तत्स्पष्टीक्रियते कण्वमुखात् महाकविकालिदासेन – *"शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने पत्युर्विप्रकृताऽपि रोषणतया मा स्म प्रतीपं गमः । भूयिष्ठा भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥"*[30]

३.कन्याधनविषये शास्त्रवचनम् –

**समस्या** – अद्यत्वे वर्धमानोऽयं कन्याधनयाचनाप्रकारः (Dowry) बहुत्र दरीदृश्यते – इदमपि दम्पत्तिविच्छेदस्य मुख्यकारणम्, अस्य त्रासात्कदाचित्स्त्री विच्छेदं प्रति गच्छति अथवा आत्महननं (Suicide) इति प्रकारमप्याश्रयति।

**उपायः** – विवाहकालेऽथवा विवाहात्परं कन्याधनं याचमानानां कृते वास्तवकन्याधनं किञ्चिद्विशिष्टमस्ति, तन्निरूप्यते – *'चित्तिरा उपबर्हणं चक्षुरा अभ्यञ्जनम् । द्यौर्भूमिः कोश आसीत् यदयात् सूर्या पतिम्'॥*[31] वस्तुतः 'चित्तिः' सम्यग् ज्ञानरूपम् उपधानम्, 'अभ्यञ्जनं चक्षुः' नाम विचारशक्तियुक्ता विशिष्टादृष्टिः, 'द्यौः' आकाशः तथा 'भूमिः' उभावपि यस्याः कोशः तादृशेन धनेन युक्ता सा 'सूर्या' कन्या 'पतिम्' पतिगृहम् 'अयात्' अगच्छत्। इति वचनम्। यदि केनचिदिष्यते कन्याधनं चेदवश्यमेतत्स्मर्तव्यमेतत्। अथवा यः कन्याधनम् इच्छति चेत् स्मारणीयः स अनेन मन्त्रेण।

४.पुराणैतिह्यकथासु विच्छेदपरिहारोपायाः –

**a)समस्या** – पतिप्रतिकूलाचरणम्, स्वार्थम्, शाठ्यम् इत्यस्ति चेद् दम्पत्योर्विच्छेदसमस्या आपतति। दृश्यते तादृशमुदाहरणं रामायणे - तपश्चर्यया लब्धवरः महाराजकेकयः पक्षिणां

---

[27] अभिज्ञानशाकुन्तलम् अङ्क ४ (पृ.क्र. ३९८)

[28] अभिज्ञानशाकुन्तलम् अङ्क ४ (पृ.क्र. ३९८)

[29] न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते॥ महाभारतम् शान्तिपर्व १४४.६

[30] अभिज्ञानशाकुन्तलम् अङ्क ४.१८ (पृ.क्र. १५२)

[31] वैदिकगृहस्थाश्रमः, दूसरा प्रकरणम् (पृ.सं. ८) अथर्व १४.१.६

भाषामवगन्तुं पारयति स्म किन्तु पक्षिणः परस्परं किं वदन्ति तन्न वक्तव्यं कमपि इति सः वरदाने प्रार्थित आसीत् । एकदा महिष्या साकं वने विहरन् सहसा शुश्राव पक्षिनां संवादः, श्रुत्वा तदहसद्राजा। किन्तु किमर्थं राजाऽहसत् तद्धासकारणं सा न ज्ञातवती अतो जिज्ञासमाना सा तस्मै पप्रच्छ । तदा महाराजकैकेयः तां उक्तवान् - 'यद्यहं त्वां कारणं वदामि चेत्सद्यो मे मरणं भविष्यति नास्त्यत्र संशयः' इति । किन्तुं महिष्या तु अट्टाहास एव कृतः 'मरिष्यते उत न तन्न जाने किन्तु ब्रूहि तत्ते हासकारणम्' इति। तस्यास्तन्मूर्खतापूर्णं वचनं श्रुत्वा 'यया मम मरणमपि तृणीकृत्य हासकारणं जिज्ञास्यते, तस्याः मे जीवने को लाभः' इति कृत्वा विजहार ताम् ।

**उपायः** – पत्यनुकूलाचारः पत्न्याः परमो धर्मोऽस्ति, पतिपरमेश्वरं सेवमाना सा स्वार्थं सर्वदा जह्यात् । याः शठाः स्वार्थपरायणाः नार्यः ताः सर्वदा दूष्यन्ते – *'धिगस्तु योषितो नाम शठाः स्वार्थपरायणाः'॥*[32] एतद्विरुद्धस्वभावाः नार्य्यः कदापि पतिविरुद्धं नाचरन्ति इत्युच्यते महाकविभिः – *'भवन्ति अभिचारिण्यो भर्तुरिष्टे पतिव्रता'॥*[33] अतः भार्या स्वार्थं दौष्ट्यं शाठ्यं त्यक्त्वा पत्यनुकूला भवेत् ।

**b)समस्या** – परपुरुषसङ्गः परपुरुषसमागमेच्छा ।

कथा - परपुरुषसङ्गेच्छा इत्येको दोषः कासुचित् स्त्रीषु दृश्यते, तदीक्षमानैः विच्छेदः क्रियते । प्रसिद्धेयं कथा वाल्मीकीरामायणे – महर्षिगौतमस्य अहल्या नामाऽतीव सुन्दरी गुणवती च पत्नी बभूव । तस्यैनां कीर्तिं श्रुत्वा रूपं दृष्ट्वा च तदासक्त इन्द्रोऽनया सह रतो भवेयमिति विचिन्त्य एकदा गौतमरहितमाश्रमं दृष्ट्वा तां प्रार्थयामास "सङ्गमः त्वहमिच्छामि त्वया सह सुमध्यमे ॥१८॥" इति। देवेन्द्रप्रस्तावेन तस्मिन्मोहिता सा तत्प्रस्तावं स्व्यकरोत् । सर्वान्ते सैव तं सूचयति - 'प्रभो! शीघ्रमितः गच्छ, आत्मानं मां च सर्वदा रक्ष' इति । किन्तु तस्य गमनात्प्रागेव तत्र प्रविष्टः महर्षिगौतमः सर्वप्रकारं ज्ञात्वा तावुभावपि शप्तवान् - इन्द्रो विफलस्तथा अहल्या वायुभक्षा भूत्वाश्रमे वत्स्यतीति । तस्याः त्यागस्य मुख्यकारणम् **'परपुरुषेच्छा'** इति ।

**उपायः** – इदं दम्पतिविच्छेदस्य मुख्यकारणं तस्माद्विवाहिताभिः सर्वदा ध्यातव्यम् – 'पतिः एव देवता नार्यः' तद्व्यतिरिक्तम् अन्यपुरुषाभिलाष आर्यस्त्रीणां कृते वर्ज्यः । उच्यते च रामायणे - "स्त्रीणामार्यस्वभावानां परमं दैवतं पतिः ॥"[34] यदि विवाहिताभिः आर्यस्त्रीभिः स्वधर्मः पाल्यते

---

[32] वा. रा. २.१२.१०३

[33] कुमासम्भवम् ६.८६

[34] वा. रा. २.११७.२२

चेन्नापतेदेषा दाम्पत्यविच्छेदापत्तिः ।

कथा – **परस्त्रीसङ्गेच्छा** - विक्रमोर्वशीयमिति विख्यातनाटके उर्वशीपुरुरवसोः प्रेमकथा वर्णिता । राजा पुरुरवा केशीदैत्येनापहृताया उर्वश्या रक्षणमकरोत् तदैव सा मोहिता जाता । अनन्तरं सौभाग्येन उभावपि एकत्र कालं यापयन्तौ आस्ताम्। एकदा विक्रमोर्वश्यौ गन्धमादनपर्वते रममाणौ आस्तां तदा काचिद्विद्याधरकन्या तत्रागच्छत् तस्यां मोहितः सन् तां निर्निमेषनेत्राभ्यां पश्यन् राजा उर्वशीमेव विस्मृतवान्, तस्मात्सन्तप्ता सा उर्वशी ततः दूरङ्गता।

**उपायः** – अत्र कविना स्पष्टं चित्रितमस्ति यद् यदि कश्चिन्मनुष्यः स्वभार्यामनादृत्य अन्यस्यामासक्तश्चेत् तद्व्यवहारो भार्यायै न रोचते । अतः अस्माकं भारतीयसंस्कृतौ न केवल स्त्रियः बोध्यन्ते तद्वत्पुरुषा अपि *'अभिलषणं स्त्रीणां परेषां धर्मनाशनम्'॥*[35] अतः यथा स्त्रीणां कृते अयं 'पातिव्रत्यम्' इति नियमः तद्वत् पुरुषाणां कृतेऽपि *'अनार्यः परदारव्यवहारः'॥*[36] इति नियमः कविभिः पाठ्यते।

**c)समस्या** – वर्तमाने बहुत्र 'बलात्कारः, अपहरणम्' इति कश्चन भयङ्करप्रकारो दृश्यते । या अनेन पीडिता भवति तस्याः जीवनं प्रायः नष्टमेव, न कश्चित् तां परिणेतुं सज्जीभवति । यदि विवाहिता स्त्री केनचित्तस्या ईच्छाविरुद्धं बलादुपभुक्ता चेत्सा त्यज्यते, विच्छेदसमस्या तत्रापतति।

**उपायः** – वाल्मीकी-रामायणे लभ्यते एषा कथा – अप्सरसां श्रेष्ठा रम्भा कुबेरपुत्रेण नलकुबेरेण परिणीता, एकदा सा नलकुबरं मेलितुम् आगच्छन्त्यासीत्तदा मार्गे रावणस्तस्या अप्रतिमं सौन्दर्यं दृष्ट्वा काममोहितः सन् पृच्छति – का त्वम् ? तदा रम्भा स्वं निवेदयति – अहं श्रीकुबेरस्य पुत्रवधू, नलकुबेरस्य पत्नी 'धर्मतः स्नुषा तेऽहम्'[37] इति । रावणः तद्वचनं श्रुत्वा प्रत्युत्तरति 'पतिरप्सरसां नास्ति'[38] इति कृत्वा तस्या इच्छाविरुद्धं स कामभोगाभिसंसक्तः मैथुनमुपचक्रमे । ततः तां तत्रैव परित्यज्य लङ्कां गतः । वेपमाना लज्जन्ती सा नलकुबरस्य पादयोः पतित्वा प्रकृतवृत्तान्तं श्रावितवती 'स्नुषा तेऽहमिति याच्यमानाऽहं तेन तत्सर्वं पृष्ठतः कृत्वा बलाद् धर्षिता'[39] इति । ततः 'त्वमपराधं मे क्षन्तुमर्हसि'[40] इति प्रार्थितवती । दोषरहिताम् एनां क्षन्त्वा

---

[35] वा. रा. ३.९.४ [36] अभिज्ञानशाकुन्तलम् अङ्क ७ (पृ.क्र. ४६०)

[37] वा. रा. उत्तरकाण्डे २६.२९

[38] वा. रा. उत्तरकाण्डे २६.४१

[39] वा. रा. उत्तरकाण्डे २६.५१ याच्यमानोऽपि मया देव स्नुषा तेऽहमिति प्रभो । तत्सर्वं पृष्ठतः कृत्वा बलात्तेनास्मि धर्षिता ॥

[40] वा. रा. उत्तरकाण्डे २६.५२

नककुबरः रावणं प्रति गत्वा तं शपति - इतःपरं कस्याश्चिद् इच्छाविरुद्धं यदि त्वं बलात् उपभोक्तुं प्रयतसे चेत् तव मस्तकं छिन्नं भूत्वा त्वं तत्रैव मरिष्यति इति।[41] अनया कथया ज्ञायते - यद्यपि सा बलादुपभुक्ता आसीत्तथापि सा नलकुवरेन पुनः पत्नीरूपेण स्वीकृतैव तद्वद्यदि अद्यत्वे काचिन्महिला तस्याः इच्छाविरुद्धं केनचित्कामार्तेनोपभुज्यते चेत्तत्र तस्याः दोषो न, अतः सा न त्यक्तुमर्हा।

एवमेव अन्या कथास्ति सुग्रीवपत्नी-रुमायाः – सीतां मृगयमानयोः रामलक्ष्मणयोः सुग्रीवेन साकं सख्यं सञ्जातं समानदुःखित्वात् । सीताविरहाद्विलपन्तं रामं सान्त्वयन् सुग्रीवः स्वपत्नीहरणदुःखं कथयति ।[42] तच्छ्रुत्वा श्रीरामः तत्पत्नीं राज्यं वालिं निहत्य पुनर्दातुं प्रतिज्ञाति तथा करोति च । अस्यां कथायां राजा सुग्रीवः अपहृतां रुमां पुनः स्वपत्नीरुपेण स्वीकरोतीति लभ्यते च प्रमाणम्।[43]

**उपायः** – यदि कस्यचिद्भार्या अपह्रियते अथवा बलात्केनचिदुपभुज्यते चेत्केवलं लोकापवादान्न न सा त्यक्तुं योग्या। ऐतिह्योदाहरणमेव अत्र प्रमाणं यत्र सुग्रीवः तथा च नलकुबरो वा स्वपत्नीं नामुञ्चत्। किञ्च अस्ति श्रीस्कन्दपुराणोक्ति यत्रोपदिश्यते - *बलात्कारोपभुक्ता वा चौरहस्तगतापि वा । न त्याज्या दयिता नारी नास्यास्त्यागो विधीयते ॥*[44] नायं नियमः केवलं स्त्रीणां कृतेऽपितु बालिकानां कृतेऽप्यस्ति। बलाद्धर्षिताभिः बालिकाभिः सह विवाहं कर्तुं जना नोत्सहन्ते, किन्तु अस्मिन् श्लोके स्पष्टमस्ति तत्र नास्ति बालिकाया दोषोऽतः सा तथैव आदरणीया यथा अन्याः।

**समस्या** – विच्छेदस्य एकं कारणमस्ति द्वयोर्मध्ये कस्यचिदपमानः, अपमानमसोढुमसमर्थः विच्छेदं प्रति गच्छति । यथा लक्ष्मी विष्णुं त्यक्त्वा जगाम । लभ्यते कथैषा श्रीवेङ्कटाचलमाहात्मे – एकदा विप्रयोः मखफलार्पणसम्बन्धी वादः प्रचलन्नासीत् सुरासुरेषु यः सर्वोत्तम इति तदा महर्षिः भृगुः 'हरिः सर्वोत्तमः साक्षात्'[45] इति उवाच । तदेवान्येषां विश्वासदार्ढ्याय ब्रह्ममहेश्वरादिन् परीक्ष्य विष्णोः निजमन्दिरमायाति । शयानस्य विष्णोः

---

[41] वा. रा. उत्तरकाण्डे २६.५७ यदा ह्यकामं कामार्तो धर्षयिष्यति योषितम्। मूर्धा तु सप्तधा तस्य शकलीभविता तदा॥

[42] वा. रा. किष्किन्धाकाण्डम् ७.६-७ - मयापि व्यसनं प्राप्तं भार्याहरणजं महत्। तदा निर्वासयामास वाली विगतसाध्वसः ॥६॥ तेनाहमपविद्धश्च हृतदारश्च राघव। तद्भयाच्च मही कृत्स्ना क्रान्तेयं सवनार्णवा ॥७॥

[43] वा. रा. किष्किन्धाकाण्डम् २७.२८ - लब्ध्वा भार्या कपिवरः प्राप्य राज्यं सुहृद्वृतः ध्रुवं नन्दति सुग्रीवः सम्प्राप्य महतीं श्रियम्॥

[44] श्रीस्कन्दमहापुराणम् काशी खण्ड ४, पूर्वार्ध स. अ. ४० श्लो ४७ (४. ४०.४७) पृ सं १८९

[45] श्रीवेङ्कटाचलमाहात्म्यम् ३२

लक्ष्म्याः अलिङ्गणस्थलं वक्षःस्थलं लज्जया प्रहरति तथापि विनम्रो विष्णुः तस्य पदचिह्नं वक्षःस्थले धृत्वा तं पूजयति। तत्प्रकारं दृष्ट्वा स्वाऽपमानमनुभवती क्रोधाभिभूता लक्ष्मीः विष्णुं वदति - 'गच्छामि देवदेवेश त्यक्त्वा त्वां जगदीश्वर । ताडितोऽसि जगन्नाथ ऋषिणा त्वं जगन्मयः ॥३५॥ मदालिङ्गस्थले देव पादेनैव जगत्पते। करवीरपुरं दिव्यं गच्छामि गरुडध्वजः ॥३६॥' इति कृत्वा ततः करवीरपुरङ्गच्छति । तस्याः प्रेमकलहः येनोपायेन प्रशाम्यति तथा करोमि एवं सङ्कल्पं कृत्वा लीलामनुषविग्रहो विष्णुः कलौ वैकुण्ठं विहाय भूमाववातरत्[46] इति प्रसिद्धा कथा।

**उपायः** - अपमानानुभूतिः इति समस्या अस्ति चेत् तज्ज्ञात्वा परस्परसमाधानं कर्तव्यम् । अहंकारं त्यक्त्वा यदुपायेन कलहशान्तिः स्यात् तथाचरणीयम् । पत्नी क्रुध्यति चेत् पतिना विनम्रेण भाव्यम्, ततः सा सान्त्वनीया तथैव पत्न्या पतिः । एवं द्वयोः शब्दार्थवत् सदा ऐक्यं भूयात्।

## उपसंहारः –

विवाहोऽविच्छिन्नो बन्धोऽस्ति कदाचिदुद्भवन्ति विरोधाः (Conflicts), किन्तु विवाहविच्छेद एव नास्ति तेषां परिहारोपायः । परस्परसम्बन्धदृढीकरणाय समयः परस्परावगमनम्, विश्वासः परस्परानन्यता च नितान्तः आवश्यकी अतः स्नेहरक्षितुं यथाशक्ति तथा सर्वं कर्तव्यम्। उपरिनिर्देष्टेषु केषुचित् कारणेष्वत्र परिहारोपायाः प्रदर्शिताः –

1.विवाहात्प्राक् शास्त्रोक्तकन्यादोषा वरदोषा वा ज्ञातव्याः, तथास्ति चेद् दोषयुक्तकन्या वरो वा न वरणीयः, वृतश्चेन्न त्याज्यः।

2.कन्याधनमिच्छतां – 'चित्तिरा उपबर्हणम्' इति वेदमन्त्रो बोधनीयः, तज्ज्ञानात्सज्जनानां कन्याधनाशा समाप्तिं यास्यति।

3.गृहस्थाश्रमं प्रवेष्टुकामानां कृते पूर्वमेव गृहस्थधर्मः, तस्य महत्वं प्रयोजनं च बोधनीयम्, यदि तद्धर्मान् पालयितुं सज्जः समर्थश्चेद् आदेष्टव्यः विवाहाय पितृभिः । गुरुजनानामुपदेशः गृहस्थैः सदा स्मरणीयः, नवविवाहिताः स्मारणीयाश्च।

4.उपरिनिर्दिष्टानां कथानां तात्पर्यं समालोक्य स्वार्थपरित्यागः, परस्परविश्वाससम्पादनम्, अन्यपुरुषदारसङ्गत्यागः, परस्परानुकूलव्यवहारः, बलादुपभुक्ताया अत्यागः, सम्मानादीन्

[46] श्रीवेङ्कटाचलमाहात्म्यम् ३८, ३९ - यस्मिन् देशे यदा प्रेमकलहोऽस्याः प्रशाम्यति ॥ ३८॥ कर्मणा येन च यथा तत्तथा च करोमि तत्। इति सङ्कल्प्य गोविन्दो लीलामनुषविग्रहः॥३९॥

अंशान् ध्यायन्तः पुरुषार्थं प्रति मार्गक्रमणं कुर्वीरन् गृहस्थाः। ये ये दोषाः उपरिनिर्दिष्टासु कथासु कृताः ते त्याज्या अथवा यथा तैः सुष्ठु-आचरितं तद्वद्वर्तितव्यम् । इत्थं प्रयत्नेन दम्पतिविच्छेदोपायाः जीवने आचर्यन्ते चेदियं दाम्पत्यविच्छेदसमस्या न्यूना भविष्यतीति नो महान् विश्वासः। अस्मिन्विषये इतोऽप्यन्वेषणं भवितुमर्हति, निश्चयेन लप्स्यन्त इतोऽप्यधिकाः उपायाः। मुख्यत्वेन दम्पती उभावपि विवाहसम्बन्धरक्षणस्य विच्छेदस्य च उत्तरदायिनौ अतः तैरेव वागर्थाविव स्वसम्बन्धो रक्षणीयः, तेनैव भविष्यति गृहस्थाश्रमो धन्यः।

॥इत्यलम्॥

## ग्रन्थसूचिः –


1.पं. ईश्वरचन्द्र कन्हैयालाल जोशी. (२०११). *ऋग्वेद संहिता* . परिमल पब्लिकेशनन्स्, दिल्ली.

2.क्षेमराज श्रीकृष्णदास. (द्वितीय संस्करण २००५): *श्रीमद्वाल्मीकीयरामायणम्*. राष्ट्रिय संस्कृत संस्थान, नई दिल्ली.

3.पाण्डेय प्रकाश. (द्वितीय संस्करण २००६): *श्रीस्कन्दमहापुराणम्*. राष्ट्रिय संस्कृत संस्थान, नई दिल्ली.

4.आचार्य नारायण राम. (२०१०): *याज्ञवल्क्यस्मृतिः*. राष्ट्रिय संस्कृत संस्थान, नई दिल्ली.

5.श्री पं. हरगोविन्दशास्त्री (२०१६): *अमरकोषः*. चौखम्भा संस्कृत संस्थान, वाराणसी.

६.ब्रह्मानन्द त्रिपाठी (२०१७): *कालिदास ग्रन्थावली*. रघुवंशम्. चौखम्बा विद्याभवन, वाराणसी.

7.शिवराज आचार्यः कौण्डिन्न्यायनः (२०१७): *मनुस्मृतिः*. चौखम्बा विद्याभवन, वारणसी.

8.श्री पं. प्रद्युम्नपाण्डेय (२०१६): *कुमारसम्भवम्*, चौखम्बा विद्याभवन, वारणसी.

9.० (सं० २०७७, सत्रहवाँ पुनर्मुद्रणम्) *ईशादौ नौ उपनिषद्* . गीताप्रेस, गोरखपुर.

10.प्रो. गोपालदत्तपाण्डेयः (२०१७): *पाणिनिविरचिता अष्टाध्यायी*. चौखम्बा सुरभारती ग्रन्थमाला, वाराणसी.

11.वेदालङ्कार, विश्वनाथ. (द्वितीय संस्करणम् २०१४) *वैदिक गृहस्थाश्रम*. रामलाल कपूर ट्रस्ट, हरियाणा.

*12.श्रीशाङ्करग्रन्थावलिः* (१९८३) उपनिषद्भाष्याणि, समता बुकस्, मद्रास। भाग ८

*13.श्रीवेङ्कटाचलमाहात्म्यम्* (द्वितीयो भाग) (१९६२) श्री तिरुमल तिरुपति देवस्थानम्, तिरुपति।

14.राधाराम शर्मन् (१९४६) *श्री पारस्कराचार्यविरचितं गृह्यसूत्रम्*, हरिहरभाष्यसहितम्, फोर्टप्रीन्टींगमुद्रायंत्रालयम्, मुम्बई।

15.(N.A) (2020). *Hindu Laws (Bare Act)*. Professional Book publishers, Delhi.

16.Sukthankar Vishnu S. (1997). *The Mahābhārata*. Bhandarakar Oriental Research Institute.

17.Kane Panduranga Vaman (1997) *History of Dharmaśāstra.* (Vol. II, Part I) Bhandarkar Oriental Research Institute, Pune.

18.Kangale. (2019). *The Kauṭilīya Arthaśāstra*. Motilal Banarsidass Publisher Private Limited.

19.Shastri Sunanda Y. (2002) *Nāradasmīti*, Bharatiya Kala Prakashan.

20.Kale M.R. (8th Reprint: Dehli, 2010, Thenth Edition: Dehli, 1969): *The Abhijnānākuntalam of Kālidāsa*, Motilal Banarasidass Publisher.

21.Joshi K. L. (2nd Edition 2010). *Sixteen Smritis*. (Vol. 2) Primal Publications.

22.Walker, Thomus F. (June 1949). *Our Present Divorce Muddle: A suggested Solution.* American Bar Association. Stable URL: https://www.jstor.org/stable/25716881

23.O'Neill William L. (1965) *Divorce in the Progressive Era*. The Johns Hopkins University Press. Stable URL: https://www.jstor.org/stable/2711354

24.Whitton, Stanley, Markman and Johnson. (April 2013) *Attitude Towards Divorce, Commitment, and Divorce Proneness in first Marriages and Remarriages.* National Council on Family Relations. Stable URL: https://www.jstor.org/stable/23440780

25.Dommaraju, Premchand. (June 2016). Divorce and Separation in India. Population Council. https://www.jstor.org/stable/44015635

26.NA. (Feb 3, 2020). *Causes of increasing Divorce rate in India.* Law Bhoomi. https://lawbhoomi.com/causes-of-increasing-divorce-rate-in-india/

# कीर्तननृत्यम् वैष्णवीयप्रीतलाभस्यैका दिक्

अंमल कुमार कर

**सारः**

नृत्यस्य सर्जकः स्वयं महादेवः। स एव परमात्मनः शक्तिस्वरूपः। तस्य गुणकीर्तनाय नृत्यं विहाय न किञ्चित् उपायान्तरं विद्यते। भरतस्य नाट्यशास्त्रे महादेवस्य ताण्डवनृत्यं पार्वत्या लास्यनृत्यं च विशेषेण समुल्लिखितमस्ति। विविधेषु काव्येषु हरपार्वतीनृत्यं वेहुलानृत्यं मेनकोर्वशीवासवादत्तादीनां नृत्यं च दृष्टान्ततया उपनिबद्धानि। जन्मनः परमेव मातृमुखात् वङ्गभाषायां श्रुतेन “खोका घुमालो पाड़ा जुड़ालो वर्गी एलो देशे” इत्यादिनृत्येन वङ्गीयानां जीवनारम्भः, क्रमेण वर्धमानानां प्रत्येकं मनुजानां दुःखविमोकोऽपि नृत्येन सम्भवतीति वैष्णवानामपि मतम्। तेषां नृत्यमिदं गौडीयम्। गौडीयनृत्येषु अन्यतमं हि कीर्तननृत्यम्। चैतन्यमहाप्रभुणा प्रवर्तितोऽयं गौडीयवैष्णवधर्मः। वैष्णववादिषु रूपसनातनजीवरघुनाथभट्टरघुनाथदासगोपालभट्टाः षट् गोस्वामिनः स्वग्रन्थेषु प्रीतिलाभोपायत्वेन कीर्तनपद्धतिं समुल्लिखितवन्तः। तेषां मते, बाहुद्वयमुत्तोल्य पादयोः ईषद्विक्षेपेण गात्रविक्षेपेण च भगवन्नामकीर्तनं क्रियते चेत् मुक्तिः अर्थात् प्रीतिलाभः कर्तुं शक्यते। नृत्येऽस्मिन् किमपि काठिन्यं नास्ति। केवलमानन्दो हृदयानन्दश्च वर्तेते।
**कूटशब्दाः**– नृत्यम्, गौडीयनृत्यम्, कीर्तननृत्यम्, धर्मः, प्रीतिलाभः।

## मूलम्

नृत्यशब्दस्य श्रवणादेव प्रथममावेगः समुत्पद्यते, मनसि आनन्दशिहरणं जागरितं भवति। नृत्येन अप्रकाश्यं किमपि वस्त्वेव नास्ति जगति। नृत्येन सर्वस्यापि अभिव्यक्तिः शक्या। यतो हि नृत्यं नाम न केवलं गात्रविक्षेपः। नृत्यरहितानां जनानां जीवनं नीरसम्। ते जीवन्तोऽपि मृता इव सन्ति। यत्र रससमारोहः भावव्यञ्जनादिसहकारेण अङ्गभङ्गिमासमन्वयश्च भवतः

तदेव नृत्यमित्युच्यते। कदाचिच्च ताललयसंयोगेन अङ्गसञ्चालनं गात्रविक्षेपो वा, तेन सह च गीतवाद्यादीनां छन्दः। तस्मात् गीतवाद्यादीनां सुमधुरच्छन्दसा आन्दोलितो देहः, कदाचित् पादभङ्गिः, कदाचित् हस्तमुद्रा, नयनयोः भावाभिव्यक्तिरेव नृत्यम्। उक्तं च –

"रसभावव्यञ्जनादियुक्तं नृत्यमितीर्यते"

यद्यपि आलङ्कारिको धनञ्जयः नृत्यं नृत्तमिति उभयं भिन्नमिति उक्तवान् तथापि दर्शनदृष्ट्या तु एकमेव। तस्य मते नृत्तं ताललयाश्रितम्, अन्यच्च नृत्यं भावाश्रितम् –

"नृत्तं ताललयाश्रयम्, अन्यद्भावाश्रयं नृत्यम्"

नृत्यस्य बहुषु भेदेषु प्रसिद्धेष्वपि सामान्यतया भेदत्रयं परिलक्ष्यते – शास्त्रीयनृत्यं लोकनृत्यं सृजनशीलनृत्यं च। एतेषु प्रथमं शास्त्रीयनृत्यमिति पदं विभज्यते चेत् शास्त्रीयं नृत्यम् इति अर्थद्वयं स्पष्टतया प्राप्यते। अत्र शास्त्रीयं नाम शास्त्रादागतम् इति। कठिननियमाबद्धं व्याकरणसमृद्धं शुद्धम् अर्थात् कदाचित् एककं कदाचिद्वा दलरूपेण प्रथायुक्तं परिशीलितं नृत्यं यत्र करणाङ्गहारचारीभ्रमरीमुद्रादिसहकारेण नृत्यं भवति तत् शास्त्रीयनृत्यम्। यथा कत्थकभरतनाट्यकथाकलिमणिपुरीकुचिपुड़ीमोहिन्याट्टमौडिशिसत्रियादीनि। लोकनृत्ये लोकशब्दस्य प्रयोगादेव अवगम्यते यत् अस्य लक्षणं किं भवितुमर्हति। सामान्यतया लौकिकजीवनस्य स्वतःस्फूर्तानन्दमुखरताया अभिव्यक्तिः येन सुसंहतेन सामाजिकेन नृत्येन जायते तत् लोकनृत्यमित्युच्यते। अस्मिन् नृत्ये नियमाः न वर्तन्ते तथा शिक्षापटुत्वं न तिष्ठति। दलरूपेण नृत्यमिदं क्रियते केवलम्। सृजनशीलनृत्यं तु चलमानमानवजीवनं समाश्रित्य छन्दोभावभङ्गिमाभिः रङ्गमञ्चे परिवेशनम्। वर्तमानकाले आधुनिकनृत्यमेव सृजनशीलनृत्यमिति चिन्तयितुं शक्यते।

**गौडीयनृत्यम्**

शास्त्रीयनृत्येषु प्राचीनवङ्गप्रदेशस्य गौडीयनृत्यमन्यतमम्। प्रख्यातः भारततत्त्वविद् व्रतीन्द्रनाथमुखार्जिमहाभागः चतुर्नवत्युत्तरोनविंशतितमे ईशवीयाब्दे सेप्टेम्बरमासस्य दशमे दिनाङ्के गौडीयनृत्यशब्दस्य प्रथमतो व्यवहारमकरोत्। नवद्वीपस्य पूर्वतनं नाम आसीत् गौड

इति। विशेषेण अलङ्कारशास्त्रे गौडीयरीतेः समुल्लेखः प्राप्यते। चैतन्यमहाप्रभुणा प्रवर्तितो वैष्णवधर्मः गौडीयवैष्णवधर्मः यः सम्पूर्णे विश्वे समाद्रियते। तद्विहाय मार्गसङ्गीतस्य सप्तगीतिषु मध्ये गौडी एकविधा रीतिः। नवरससमन्विते अभिनये ये रागाः व्यवह्रियन्ते तेषु विविधगौडानां समुल्लेखः प्राप्यते। संगीतरत्नाकरे संगीतस्वरूपमाश्रित्य भारतभूमेः ये पञ्च विभागाः कृतास्तेषु गौडः अन्यतमः। भरतमुनिप्रणीते नाट्यशास्त्रे गौडवङ्गस्य नर्तकनर्तकीनां तासां वेशभूषादीनां चोल्लेखः प्राप्यते। महेश्वरमहापात्रविरचितायाम् अभिनयचन्द्रिकायां येषां सप्तविधानां नृत्यानामुल्लेखः प्राप्यते तेषु गौडवासीयं नृत्यं तथा गौडीयं नृत्यम् अन्यतमम्। गौडीयनृत्यं मूलतः कीर्तननृत्यरूपेणैव अवगम्यते। कृधातोः कीर्तनशब्दो निष्पन्नो यस्यार्थः प्रशंसा। सामान्यतया भगवतो जयगानेन मुखरितस्य नृत्यं कीर्तननृत्यमित्युच्यते। वङ्गे कीर्तनस्य प्रभावः सुदृढो वर्तते। पाँचालीगायकस्य एकस्मिन् हस्ते चामरम् अपरहस्ते च मन्दिरा, पादयोः नूपुरम्, एतैश्च सह मृदङ्गादयः। सुरतालकरतालमृदङ्गसहकारेण भगवतो गुणकीर्तिः विजयकीर्तिश्च कीर्तनमिति प्रसिद्धम्। भागवतेऽपि कीर्तनशब्दस्योल्लेखः प्राप्यते –"स्मरणं कीर्तनं विष्णोः" इति। वैष्णवधर्मस्य प्रवर्तकः श्रीचैतन्यो महाप्रभुः सन्न्यासग्रहणात्परं रथयात्रायां यन्नृत्यमकरोत् तत् नृत्यसंकीर्तनम् इति नाम्ना सुप्रसिद्धं तथा भक्ता यत् अकरोत् तत् महानृत्यसंकीर्तनम्। परवर्तिनि काले चैतन्यानुगामिनः अनेन नृत्येन भक्तिप्रसारमकुर्वन् यस्योल्लेखः वैष्णवपदावलीग्रन्थे समुपलभ्यते –

"नाचरे नाचरे मोर दामोदर।
यत नाच तत दिव क्षीर ननी सर॥
आमि नाहि देखि वाछा नाच आर वार।
गलाय गाँथिया दिव मणिमय हार॥"

वङ्गे गुरुशिष्यपरम्पराया एकं नृत्यम् इदं कीर्तननृत्यम्। अस्य नृत्यगीतस्य महान् प्रभावः परिलक्ष्यते। सामान्येन श्रीमृदङ्गेन वादकस्य अपूर्ववादनशैल्यैव मोहनं सम्भवति। अत्र शास्त्राभिमतानां चारीभ्रमरीगतिग्रीवामस्तकादीनां व्यवहारः परिलक्ष्यते। वस्तुतस्तु भक्तिरस

एव प्रधानः। आलङ्कारिकाणां रसास्तु हास्यकरुणरौद्रवीरभयानकबीभत्साद्भुतशान्ताः। एतेषां रसानां समारोहे सत्यपि अत्र रतिभेदः शृङ्गारो वा प्रधानो भवति। अयं च शृङ्गारः शान्तदास्यसख्यवात्सल्यमधुरभेदेन पञ्चविधः। द्वात्रिंशत्सम्भोगानां द्वात्रिंशद्विप्रलम्भानां च स्वीकारेण शृङ्गाररसस्य चतुःषष्टिभेदानां कीर्तनं दृश्यते। अत्र बहवः सम्प्रदायाः सन्ति – मनोहरशाही, गराणहाटी, रेणेटी, मान्दारिणी, झाड़खण्डी इत्यादयः। वृन्दावनस्य षट्सु गोस्वामिषु अन्यतमस्य श्रीलजीवगोस्वामिनो मते, हरिनामकीर्तनेन सह नृत्यं क्रियते चेदेव सर्वापराधेभ्यो मुक्तिलाभः सम्भवति। इमे अपराधास्तावत् हरिनामविषये अहितकरणं, गुर्ववज्ञा, श्रुतिशास्त्रनिन्दा, हरिनाम्नि अर्थवादकल्पने, अपराधसम्बन्धः, व्रतादिना सह हरिनाम्नि प्रमादः, श्रद्धाविरहितं कर्म, नाममाहात्म्यश्रवणेऽपि तस्मिन् विषये प्रीतिराहित्म् इत्यादयः। उक्तं च –

"सत्प्रभृतिष्वपराधेषु तु तत्सन्तोषार्थमेव सन्ततनामकीर्तनादिकं समुचितम्"

इति। प्रभुपादाः रूपकीर्तनगुणकीर्तननामसङ्कीर्तनादिभिः कृष्णभजनमभिधेयमाहुः। एवमेव मायाबन्धस्य विनाशो भवति तथा अशेषक्लेशोपशमेन भगवत्प्राप्तिर्भवति।

**कीर्तननृत्यम्**

न केवलं ग्रामे, वङ्गप्रदेशस्य नगरेष्वपि गीतनृत्यं परिलक्ष्यते। एतद्विहाय मणिपुरासामत्रिपुराविहारौडिशाप्रभृतिष्वपि प्रसारितमिदं नृत्यम्। सामान्यतया रथयात्रा जन्माष्टमी राधाष्टमी चैतन्यदिवसः रामकृष्णदिवसः इत्यादिषु अनुष्ठानमिदं भवति। कीर्तनसङ्गीतेन सह मृदङ्गः मञ्जीरं स्वरन्धरा इत्यादीनिवाद्ययन्त्राण्यपि तिष्ठन्ति। हस्तद्वयस्योत्तलनेन विविधानां शास्त्रवर्णितानां हस्तकानां व्यवहारो दृश्यते। इयं मुद्रा ऊर्ध्वबाहुपताका अलपद्मं वा तथा ऊर्ध्वमण्डली हस्तः। इदं नृत्यगीतं मङ्गलाचरणगौरचन्द्रिकाप्रबन्धवाद्यादिना आरभ्यते तथा आरत्या अन्तर्दशानृत्येन वा समाप्यते। तत्र पुरुषाः धौतवस्त्रं कञ्चुकं नार्यश्च शाटिकां दधते। कण्ठे तुलसीमालाधारणं ललाटे च तिलकधारणं कृत्वा नृत्यं कुर्वन्ति। जङ्गिपुरस्य

श्रीनरोत्तमसान्यालव्रजेनपाठकगौरीशङ्करवन्द्योपाध्यायव्रजराखालदासादयः नैके कीर्तननृत्यकुशलिनः प्रसिद्धा आसन्।

प्राचीनकाले विशेषतः पालसेनयुगे पाहाड़पुरे जगज्जीवनपुरे विष्णुपुरे वासुदेवमन्दिरे अम्बिकाकालनायाः प्रतापेश्वरस्य लालजिनः कृष्णचाँदजिनश्च मन्दिरभित्तिषु तथा चित्रकलायां नृत्यभास्कर्यं परिलक्ष्यते। तस्मात् अस्य नृत्यस्य प्रचलनं प्रागपि आसीदिति स्पष्टमवगम्यते।

## कीर्तननृत्ये रसप्राधान्यम्

नाट्ये नृत्ये च रसस्य समारोहः तिष्ठत्येव। नैके आलङ्कारिकाः शृङ्गारहास्यकरुणरौद्रवीरभयानकबीभत्साद्भुतशान्तान् नवरसान् आहुः। किन्तु वैष्णवानां सविधे एते गौणत्वेन प्रसिद्धाः। तेषां मते, सर्वेऽपि रसाः भक्तिरसत्वेन परिणमन्ते, भक्तिरसस्यैव प्राधान्यम्। तस्मात् प्रोक्ता रसाः गौणभक्तिरसाः। वस्तुतस्तु, ते भक्तिरसस्य मुख्यगौणरूपेण भेदद्वयमकुर्वन्। मुख्यरसाः पञ्च – शान्तदास्यसख्यवात्सल्यमधुराः। उक्तं च वङ्गभाषायाम् –

"रतिभेदे कृष्णभक्ति रसपञ्चभेद।
शान्त दास्य सख्य वात्सल्य मधुररस नाम॥"

किञ्च, अन्ये गौणभक्तिरसाः। शान्तरसः ज्ञानभक्तिरस इत्युच्यते, कर्मसमर्पणं दास्यं, सख्यं मैत्रीरसः, वात्सल्यरसस्तु भक्तभगवतोर्मध्ये आविर्भूतः तथा मधुररसः समुज्ज्वलः कान्तः शुचिः शृङ्गाररसनाम्नापि अभिधीयते। अत्र कान्तो भगवान् तथा कान्ता भक्तः इति सम्बन्धे तुल्यो रसः। सर्वत्रैव भगवान् कृष्णस्तस्य अवतारलीला च संयुक्ता। पूर्वरागानुरागमानप्रेमवैचित्र्यप्रवाससंक्षिप्तसंकीर्णसम्पन्नसमृद्धिविशिष्टाः विषयाः अपि सम्बद्धाः।

## कीर्तननृत्ये भावप्राधान्यम्

शान्तरसस्य स्थायिभावो शान्तरतिस्तथा उद्दीपनविभावः उपनिषदां पाठः श्रवणं निर्जनप्रदेशे साधना ज्ञानसङ्गी ब्रह्मसत्रम् इत्यादिः। दासरसस्य स्थायिभावो दास्यरतिः विषयालम्बनञ्च श्रीकृष्णः। सख्यरसस्य स्थायिभावः सख्यरतिः तथा श्रीकृष्णस्य

वयोरूपवेणुपराक्रमशङ्कादयः उद्दीपनविभावाः। अनुभावास्तु कन्दुकक्रीडा कृष्णेन सहोपवेशनं शयनं नृत्यं गीतम् इत्यादयः। वात्सल्यरसे कुमारस्य वयोरूपस्मितहासचापल्यादयः उद्दीपनविभावाः। अन्ते च मधुररसस्य भावः मधुरतिः उद्दीपनविभावश्च वेणुध्वनिः।

शृङ्गारमाध्यमेन नायिकादर्शनं, नायकदर्शने नायिकाया विह्वलता विशेषेण मुरलीध्वनिना विह्वलाया मुरलीधरं प्रति आकर्षणं, गृहत्यागः, प्रवासयापनं, विरहदाशा, हस्ताकर्षणं, रतिभोगः, वस्त्राकर्षणं, मथुरागमनं, द्वारकागमनं, जलकेलिः, वेणुचौर्यम्, नौकाविलासः, मधुपानं, व्रजगमनम् इत्यादयः नृत्यविषया भवितुमर्हन्ति।

**कीर्तननृत्ये धर्मीयप्रभावः**

नृत्यकलायां वैष्णवधर्मस्य प्रभावः सुमहान् वर्तते। विविधेषु मन्दिरभित्तिषु ऐतिह्यं संस्कृतिस्तथा चित्रलिपिषु वैष्णवधर्मस्य विष्णोः मूर्तिः वंशिनः कृष्णस्य मूर्तिः लीलादिकं च धर्मसाधनायाः माहात्म्ये प्रमाणभूतानि। जयदेवस्य गीतगोविन्दं, वडुचण्डीदासस्य श्रीकृष्णकीर्तनं, श्रीभागवतपुराणं, ब्रह्मवैवर्तपुराणम् इत्यादिषु राधाकृष्णलीला वैचित्र्यपूर्णा। वैष्णवमते श्रीकृष्णः पूर्णस्वरूपः सकलशक्तिस्वरूपश्च। राधिका तु कृष्णस्यैव ह्लादिनीशक्त्याः पूर्णतमो विकाशः। कृष्णः अंशी राधा च तस्यांशभूता। यथा अग्निदाहशक्ती तथैव कृष्णराधे स्तः। उक्तं च वङ्गभाषायाम् –

"राधापूर्णशक्ति कृष्णपूर्णशक्तिमान
दुइवस्तु भेद नाहि शास्त्र परमाण।
मृगमद तार गन्ध यैछे अविच्छेद
अग्निज्वालाते यैछे ना हि कोनो भेद॥"

गीतगोविन्दस्य राधातत्त्वमूलकं नृत्यं, दशावतारनृत्यं, नृसिंहनृत्यं, नाचनीनृत्यं तथा विविधेषु छौषु रासलीला कृष्णलीला शङ्खचूडदर्पभञ्जनम् इत्यादिकम् अत्यन्तं प्रसिद्धम्। विशेषेण कीर्तने वसन्तरासस्य अन्येषां रासानां च वर्णनायां नवरसानां विविधनायिकानां च वर्णनायां वैष्णवधर्मस्य अतीव प्रभावो वर्तते। विष्णुपुरस्य राजा वीरहाम्वीरमल्लः१५९१-

१६१६ईशवीयाब्दे वैष्णवधर्मं गृहीतवान् तथा 'रासमञ्चं' प्रतिष्ठापितवान्।

**कीर्तननृत्यस्य युक्तता**

कीर्तननृत्येन श्रीभगवतः स्तुतिगानमेव मुख्यमुद्देश्यम्। वैष्णवाः अनेनैव मुक्तिलाभस्य पन्थानं दर्शितवन्तः। मधुमिश्रितं हरिनाम विना अन्यत्किमपि तत्त्वं सत्यं प्रधानं च भवितुं नार्हति। जीवगोस्वामिभिरुक्तम् –"ये कलियुगे कीर्तनप्रचारं करिष्यन्ति ते अनायासेनैव स्वार्थसिद्धिं लब्धुं शक्नुवन्ति।" श्रीगुरुसेवायां निरतेन तस्य शिक्षया शिक्षितेन च श्रीभगवतश्चरणयोः भक्तिलाभाय कीर्तनं कर्तव्यम्। श्रवणादिषु नवविधाषु भक्तिषु कीर्तनमन्यतमं प्रधानं च। भगवतो नामश्रवणानन्तरं कीर्तनं कर्तव्यमम्। यतो हि नामश्रवणात्परम् अन्तःकरणं शुद्धं भवति, अन्तःकरणशुद्धौ च प्रीतेः सर्वोऽपि मार्गः सरलो भवति। श्रवणाभावे तु कीर्तनीयं वस्तु अज्ञातमेव भवति। तस्मादेव तत्पूर्वं कर्तव्यम्। यदि कस्यचित् महतो जनस्य कीर्तनश्रवणसौभाग्यं न जायते तर्हि तेन पृथक्कीर्तनं कर्तव्यम्। कीर्तनेऽपि नामरूपगुणलीलाक्रमेण व्रतिना भवितव्यमिति इति मतम्।

कीर्तनस्य प्रधानं फलं तु अभीष्टस्य श्रीभगवतश्चरणयोः प्रेमलाभः। किन्तु नामकीर्तने अपराधः फलदाने बाधको भवति। दश अपराधास्तावत् – साधुनिन्दा, शिवविष्ण्वादीनां भेदचिन्ता, गुर्ववज्ञा, वेदादिशास्त्रनिन्दा, हरिनाम्नि अर्थवादकल्पनम्, नाममाहात्म्येन पापे प्रवृत्तिः, धर्मव्रतफलहोमादिहरिनामफलयोरैक्यचिन्तनम्, नामग्रहणे अवधानाभावः, नाममाहात्म्यं श्रुत्वापि उदासीनस्य अहम्ममाभिमानपुरःसरं विषयभोगः, श्रद्धाहीनान् बहिर्मुखान् उपदेशश्रवणे इच्छारहितान् उद्दिश्य उपदेशप्रदानम् इति। एतान् यथाशक्ति वर्जयित्वा नामकीर्तनं कर्तव्यम्।

कीर्तननृत्येन सह अन्येषां नृत्यानां भेदो महान्। प्राचीनकालादेव भारते नृत्यदेवतारूपेण नटराजः स्वीक्रियते। अतः शैवशाक्तवैष्णवानां प्रभावेण बहुत्र इदं नृत्यं भवति। अत्रायं विशेषः, अन्यैः शास्त्रीयैः प्रादेशिकैः नृत्यैर्वा सह एतस्य भेदः कुत्र अथवा प्रकृतविषयो वा कः इत्यत्र व्याख्यानापेक्षैव नास्ति। यदि कीर्तननृत्यमिदं विषयगतमिति चिन्त्यते तर्हि

सर्वमपि नृत्यं कीर्तनीयनृत्यपरिकल्पनायामन्तर्भावयितुं शक्यते। अर्थात् पृथक्पृथक्तत्त्वं तालयाश्रितं कृत्वा कीर्तनं कर्तुं शक्यते। किन्तु यदि कीर्तनं पृथक् इति परिकल्प्यते तर्हि तत् वेशभूषादीन् नापेक्षते, न च मञ्चमपेक्षते। बाहुद्वयं समुत्तोल्य द्वयोः पादयोः ईषदान्दोलनेनैव इयं नृत्यसाधना कर्तुं शक्यते। इदमेव वैष्णवानां प्रकृतं कीर्तननृत्यम्।

## ग्रन्थसूची


१. मुखोपाध्याय, महुया, गौडीयनृत्य, दि एशियाटिक् सोसाइटि, कलकाता –२०००

२. श्रीमद्भक्ति सुहृद् परिव्राजक महाराजेन (सम्पा.), श्रीभक्तिसन्दर्भः, गौडीयमिशन, कलकाता –२००५

३. गोस्वामिना, प्राणगोपाल, श्रीश्रीभक्तिसन्दर्भः, संस्कृतपुस्तकभाण्डार, कलकाता, १४०७ वङ्गाब्दः

४. घोष, शम्भुनाथ, कत्थक नृत्येर् रूपरेखा, आदिनाथ व्रादार्स, कलकाता –१९७९

५. चक्रवर्ती, मन्दिरा, फिरक्नी, दमदम सङ्गीतम्, कलकाता –२००४

६. अधिकारी, अनुपशङ्कर, नृत्यवितान, आदिनाथ व्रादार्स, कलकाता –१९७३

७. वन्द्योपाध्याय, सुरेशचन्द्र, चक्रवर्ती, छन्दा, भरत नाट्यशास्त्र, नवपत्रप्रकाशन, कलकाता - १९८०